Martanda Manik
Manikprabhakar
माणिक प्रभाकर:
Sanskrit
Printed on paper
1829 saka
folio: 36
8.5"X 4.9"
Complete

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

श्रीगणेशाय नमः॥ श्रीमत्सद्गुरुमाणिकप्रभवे नमः॥ श्रीश्रीदं भारतीविद्यादायकं शक्तिशक्तिदम् ॥ विघ्नेशं विघ्नहर्तारं सर्वकर्तारमाश्रये ॥ १ ॥ यदाधारेण यत्रैव याचितो याति यत्पदम् ॥ येषां करोति स्रष्टारं सर्वकर्तारमाश्रये ॥ २ ॥ या यस्मात्कुरुते सृष्टिं दृष्टिं नायाति सा पुनः ॥ तस्यापि सर्वभर्तारं सर्वकर्तारमाश्रये ॥ ३ ॥ सृष्टिं च प्रतिसृष्टिं चेदसृष्टिं चापि दृष्टितः ॥ अतः सर्वत्र रंतारं सर्वकर्तारमाश्रये ॥ ४ ॥ यत्रकुत्रापि सर्वत्र त्रस्तस्यापि त्रितापतः ॥ परत्रेपि च त्रातारं सर्वकर्तारमाश्रये ॥ ५ ॥ ब्रह्माण्डकोट्यो रोमकोटौ कुर्वंति तांडवम् ॥ बृहत्पिंडविधातारं सर्वकर्तारमाश्रये ॥६॥ निगमागमवक्तारं सुगमागमनं स्मृतं ॥ गमागमाच्च स्थातारं सर्वकर्तारमाश्रये ॥ ७ ॥ पूर्णादिः पूर्णमध्यश्च पूर्ण एवावशिष्यते ॥ पूर्णत्वात्पूर्णदातारं सर्वकर्तारमाश्रये ॥८॥ श्रीगुरोरष्टकस्यास्य पाठात्तुष्टो बभूव ह ॥ स्पष्टोहं कष्टनाशाय दिष्टं धक्ष्यामि दृष्टितः ॥ ९ ॥ कस्मात्स्तवः कृतो वत्स प्रत्यक्षे मयि संस्थिते ॥ आपन्नानां विपन्नः स्यात्तस्माद्वद यथार्थतः



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

॥ १० ॥ दीन उवाच ॥ किं वक्ष्ये दुःखमतुलं कर्म वा दुष्करं विभो ॥ तथा-
प्याज्ञाबलाच्चैव निर्लज्जं गुरुसंनिधौ ॥ ११ ॥ अनाद्यविद्याभूतत्वाज्जीर्णवासनया
वृतम् ॥ मूलकर्मगुणैर्बद्धादूर्ध्वाधो गमनं मम ॥ १२ ॥ चत्वार्यशीतिलक्षाणि
स्थानानि भ्रमितानि वै ॥ नरकाण्यप्यसंख्यानि क्वचित्स्वर्गस्य दर्शनम् ॥ १३ ॥
यत्रयत्र यथा कर्मरज्जुनाकर्षितं मम ॥ तत्रतत्राभिगमनं नस्यप्रोतपशोरिव
॥ १४ ॥ पारतंत्र्यादसंख्यानि कल्पानि विगतान्यपि ॥ नाद्यापि मम विश्रां-
तिर्मृत्युरायाति पृष्ठतः ॥ १५ ॥ अतः कालावधिर्नास्ति सर्वदुःखविकत्थने ॥
कर्मणा यन्मनुष्यस्य नवमासिकगर्भजम् ॥ १६ ॥ दुःखमेकैकशो वक्तुं नवमा-
सावधिर्भवेत् ॥ किं करोमि क्व गच्छामि क्व तिष्ठामि वसामि वा ॥१७॥ मृत्यो-
रुपायो योगेन श्रुत्वा पूर्वयुगे कृतः ॥ महाकल्पे तु मरणाद्धारणा न कृता
पुनः ॥ १८ ॥ तत्तद्युगे साधनानि सर्वाण्यपि कृतानि तु ॥ नापयाति
यतो मृत्युस्ततः कं शरणं व्रजे ॥ १९ ॥ मृत्युतो व्यर्थतामेति देहगेहादि सं-





CC.O- Jangamwadi Math Collection. Digitized by eGangotri

ग्रहः ॥ तद्भयाद्ग्रंथविस्ताराात्तात्पर्यं तु निगद्यते ॥ २० ॥ सर्वपापात्सर्वरोगाः पीड्यंते सर्वदा तनुं ॥ सर्वरोगास्पदो मृत्युर्भवरोगः स एव तु ॥ २१ ॥ कुत्रापि नास्ति ब्रह्माण्डे भ्रमितेपि भिषग्वरः ॥ त्वमेव दृष्टः पूर्णत्वादतोपायं वदस्व भो ॥ २२ ॥ एकौषधेन सर्वेषां रोगाणां च निवारणम् ॥ यथा स्यादतुलानंद-स्तथा कुरु दयानिधे ॥२३॥ सर्वयत्नविहीनस्य सर्वदैवोज्झितस्य च ॥ अतस्त्वतीव दीनस्य कृपां कुरु कृपानिधे ॥ २४ ॥ इत्थं दीनध्वनिं श्रुत्वा सर्वेषां हितका-रकः ॥ प्राह प्रहस्य गंभीर एवमेव वदामि ते ॥२५॥ वज्राधिकगुणोपेतं सर्व-मात्रोत्तमं वरम् ॥ गुरुचारित्र्यमेवात्र तत्र त्राणं विनात्रिजात् ॥ २६ ॥ कैलासे शंकरोप्याह पार्वतीं नास्त्यतः परम् ॥ वेदशास्त्रपुराणानां मतानामप्यनेकशः ॥ २७ ॥ इदमेव हि तात्पर्यं तस्मात्त्वं सेवनं कुरु ॥ वैद्यानामौषधीनां च गुरु-वंदनमादितः ॥ २८ ॥ आद्यत्वाच्च गुरोरस्मान्मंत्रयंत्रौषधस्य च ॥ सर्वाभि-मानी चैकत्वात्सर्वरोगेषु शस्यते ॥ २९ ॥ एकेनानेन ते सर्वं भावितं भाव-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

नाबलात् ॥ प्राप्स्यसे नात्र संदेहो ह्यतः किमवशेषितम् ॥ ३० ॥ श्रुत्वा सद्गुरुवाक्यं तु महाधारेण निर्भयम् ॥ भूत्वा धृत्वाथ पादाब्जं प्रश्रयाद्विनतोऽब्रवीत् ॥ ३१ ॥ अनादिकालमारभ्य यावत्पादाब्जदर्शनम् ॥ तापं च भ्रमणं पापं नष्टं च दृष्टितः क्षणात् ॥ ३२ ॥ कृपया यद्यथा चोक्तं चरितं वद विस्तरात् ॥ त्वच्चरित्रं विना त्वत्तोऽशक्यस्यादल्पबुद्धितः ॥ ३३ ॥ दीनभावं समालोच्य स्वसमीपस्थवत्सलं ॥ आदिशत्कथने प्रीत्या सुधादृष्ट्यान्ववर्षत ॥ ३४ ॥ वत्सलोऽपि तथाभूतं दीनं दीनजनप्रियः ॥ यथावगाहमवदत्सदापूर्णमहार्णवम् ॥ ३५ ॥ इति श्रीमननादिसिद्धचरितामृताब्धिसारे भवदवधान्वंतरे दीनवत्सलसंवादकरे माणिकप्रभाकरे प्रथममयूखः ॥ १ ॥

वत्सल उवाच ॥ अथ पूर्वं पूर्णतरं निर्विकल्पमखंडितम् ॥ यत्पूर्वाः श्रुतयस्तत्र यदाधारविहारिकाः ॥ १ ॥ पुरुषत्वं तु तं ध्यात्वा बोधयामासुरोजसे ॥ ताभिर्यथा स्तुतस्तत्र तत्तद्रूपेण भासितः ॥ २ ॥ यस्त्वनंतासने योगनिद्रामुद्रा-



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

भिरार्द्रवान् ॥ तदार्द्रनाभिकमलादभूत्स कमलासनः ॥ ३ ॥ धाता यथापूर्व-
मेव प्रार्थितः सृष्टिसर्जने ॥ तथैवाकल्पयद्यत्नात्तस्मात्पुत्रोऽत्रिरन्वभूत् ॥ ४ ॥
त्रित्वात्त्रैगुण्यविषयाः प्रजाः सर्वाः प्रजापतिम् ॥ प्रार्थयामासुस्त्रैतापात्पापाच्चा-
पि कथं च्युतिः ॥ ७ ॥ ते नारदप्रभृतयः प्रार्थयंति परार्थकाः ॥ तासां विधि-
विधानाय नावकाशाच्च स्वस्य वै ॥ ६ ॥ अत्रिं पृच्छध्वमित्यूचे पप्रच्छुस्तं
पुनः प्रजाः ॥ अत्रिस्तु त्रितयाभावादभावः सूचितस्ततः ॥ ७ ॥ उभयभ्रष्टतः
सर्वाश्चाभयं शरणं ययुः ॥ अस्मत्तापापनोदाय दाता कोप्यस्ति वा न वा ॥८॥
तदादानाय सर्वेषां त्रितापहरणाय तु ॥ दत्तात्रेयो विजयते स्मर्तृगामी यतः
सदा ॥ ९ ॥ नारदादिप्रजाः सर्वाः संबोध्य समतोषयत् ॥ अहमेव भुवं यास्ये
स्वस्थमातिष्ठत ध्रुवम् ॥ १० ॥ ततो दत्तः स्वयं सोऽभूद्भुवि तीर्थानि पर्यटन् ॥
लोकानुद्धारयामास दर्शनेनैव तत्क्षणात् ॥ ११ ॥ ते सर्वे स्वाश्रमं प्राप्य तन्म-
नस्का महोत्सवाः ॥ आसंत ध्याननिरतास्त्वतस्तानुद्धरिष्यति ॥ १२ ॥ कलि-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

मागतमाज्ञाय यतिधर्मान्सनातनान् ॥ कालेन नष्टान् प्रायेण तानुद्धर्तुं मनो
दधे ॥ १३ ॥ तथैव पर्यटन्योगी कश्चिद्ब्राह्मणमंदिरे ॥ भिक्षां संगृह्य च तयोः
सद्भावाद्बालकोऽभवत् ॥ १४ ॥ ततोपि पर्यटन्नागात् कृष्णायास्तटमुत्तमम् ॥
लीलां कुर्वन्ननेकां च तत्रापश्यन्मुमूर्षिकां ॥ १५ ॥ तामपृच्छत्कुतो दुःखं कुपुत्र-
त्वात्सुतं ददौ ॥ अयाचयत्स्वेन साम्यं तस्मादंतर्दधे पुनः ॥ १६ ॥ तस्या गृहे
पुनरभूत्पुनस्तीर्थाटनं ययौ ॥ अटमानस्तु काश्यां वै संन्यासस्य विधानतः ॥१७॥
तद्धर्मान्बहुधा स्थाप्य तदा सर्वेपि तं यतिं ॥ शरण्यं शरणं जग्मुः सर्वधर्मादि-
स्थापने ॥१८॥ सर्वस्य पालकस्त्वं हि सर्वेषां गतिमावह ॥ यतेः सर्वस्य जातीनां
स्थापनं तु कथं भवेत् ॥१९॥ इत्थं विचार्य योगींद्रो धृत्वा वर्णोत्तमं पुनः ॥ मणिचूले
करिष्यामीत्युक्त्वा चांतर्दधे गुरुः ॥ २० ॥ दीनस्त्वद्भुतमाहात्म्यं श्रुत्वोत्कंठित-
मानसः ॥ वत्सलं पुनरप्याह स्तवमानो मुहुर्मुहुः ॥२१॥ दीन उवाच ॥ वात्स-
ल्याद्वत्सलेत्युक्तं प्रभुणात्र यथार्थकम् ॥ अतो दीनस्य वात्सल्यादनाथस्य सना-



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

थकम् ॥ २२ ॥ मम नाथस्त्वमेवासि धन्वंतरिरपि स्फुटम् ॥ त्वमेव सर्वं स्वीयत्वाद्गुरुचारित्र्यमादिश॥२३॥एकस्य प्राणत्राणं तु पुण्यागण्यत्वमुच्यते ॥ सर्वेषां प्राशिते सोमे न स्थानं पुण्यस्थापने॥२४॥ मणिचूलस्य माहात्म्यं तथा दत्तस्य वैभवं ॥ वद विस्तारतो मह्यं तृप्तिर्नैवोपजायते ॥ २५ ॥ वत्सलो दीनवत्साय चरितं दुग्धमुत्तमं ॥ दत्तधेनुपयस्विन्याः पाययामास स्नेहतः ॥२६॥ इति श्री मननादिसिद्धचरितामृताब्धिसारे भवदवधान्वंतरे दीनवत्सलसंवादकरे माणिकप्रभाकरे द्वितीयमयूखः ॥ २ ॥

वत्सल उवाच ॥ शृणु वत्स प्रवक्ष्यामि दत्तलीलामहोत्सवं ॥ श्रीपादश्रीवल्लभस्य नारसिंहसरस्वतेः ॥ १ ॥ लीलाविर्भावमात्रस्य यस्य रूपाण्यनेकशः ॥ लोकानुग्रहमात्रं तु स्वावतारोऽभिभूयते ॥ २ ॥ अतस्त्वनुग्रहार्थाय तीर्थानि पर्यटन् गुरुः ॥ गौप्यरूपेणाटमानो मणिचूलं समभ्यगात् ॥ ३ ॥ यत्र पूर्वं सप्तपुत्रा मणिमल्लेन पीडिताः ॥ देवादीनामजेयत्वात्तमुग्रं शरणं ययुः ॥ ४ ॥

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

शूली मार्तंडरूपं तु धृत्वाऽगच्छत्ससैनिकः ॥ यस्य सैन्यस्याद्रिवरो भारान्निम्न-
त्वमागतः ॥ ५ ॥ दैत्यानां किमु सामर्थ्यं क्षणात्तौ निहतौ पुनः ॥ संस्थाप्य
सप्तपुत्रांश्च ऋषीन् सर्वानपि स्वयम् ॥ ६ ॥ गमनाय मनश्चक्रे चक्रिरे मुनयः
स्तवम् ॥ त्र्यंबक महादेव सुगंधे पुष्टिवर्धन ॥ ७ ॥ दृष्ट्या त्वया मूर्छितस्तु
सर्वेषां मृत्युरुत्कटः ॥ अतस्त्वत्रैव स्थातव्यं रूपेणानेन सर्वदा ॥ ८ ॥ इति सर्वैः
प्रार्थितश्च मूलमल्लारिस्थापनात् ॥ सार्धत्रिकोटितीर्थानि घृतमार्यादिदेवताः
॥ ९ ॥ आसन् सर्वस्य कल्याणे तदारभ्य धरातले ॥ आसीत्सुरम्यं सर्वेषां मै-
लारक्षेत्रमुत्तमम् ॥ १० ॥ स्वर्णचांपेयपुन्नागबकुलादिसुगंधितम् ॥ चूतखर्जूरपन-
सकदल्यादिफलैर्वृतम् ॥ ११ ॥ हंसकारंडवाकीर्णं कोकिलादिककूजितम् ॥ इत्थं
क्षेत्रे सुरम्याद्रौ विहरत्स्वेच्छया गुरुः ॥ १२ ॥ कदाचिल्लाडसिद्धस्य नैर्ऋत्ये वन-
माविशत् ॥ गौप्यमल्पजनाकीर्णं दृष्टवान् तत्सविस्मयम् ॥ १३ ॥ मनोहरो बु-
द्धिरिति दांपत्यमधिकारिकम् ॥ ईर्षात्रयविहीनत्वादत्रिस्त्वत्र कथं कुतः ॥ १४ ॥



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

सर्वाप्यसूयारहितादनसूया कुतो गता ॥ इति विस्मयमापन्नः स्मरन्पूर्ववचस्तदा ॥ १५ ॥ चैत्रे जैत्रतिथौ मित्रछत्रीभूतेऽत्र स्वात्रिजे ॥ मनोमात्रे रामक्षेत्रे यात्रार्थे सकलत्रके ॥ १६ ॥ तत्रैवाविर्भवद्दत्तः सत्तया स्वप्रकाशकः ॥ परस्परेणोजभाजौ रेजतुः स्वात्मराजितौ ॥ १७ ॥ अथ प्रजापतिर्ज्ञात्वा प्रजोद्धारप्रमोदितः ॥ मत्प्रजारक्षणायेदमिति स्तोतुं प्रचक्रमे ॥१८॥ ब्रह्मोवाच ॥ योगेश योगविन्यास योगात्मन्योगभावन ॥ योगादेशक योगार्य योगातीत नमोऽस्तुते ॥ १९ ॥ जय सर्वगुणातीत जयशुद्धगुणोदय ॥ जय षड्गुणसंपूर्ण गुणद्रष्ट्रे नमोस्तु ते ॥२०॥ भक्तिवैराग्यसज्ज्ञानकृतपात्रे सुविस्तृते ॥ सज्जनानंदसंदोहदुग्धदोहनगोपते ॥२१॥ नमोनमस्तेऽखिलविक्रमास्पद यतः कलौ दोषनिधौ सुदुस्तरे ॥ भूत्वा त्वमेकोऽद्भुतनाविकः प्रभो नेष्यस्यथो पारमिदं जगद्यतः ॥२२॥ इति स्तुत्वा विधिरपि निजगाम स्वकर्मणे ॥ इत्याकर्ण्य वचस्तस्य दीनः शंकान्वितोऽब्रवीत् ॥ २३ ॥ दीन उवाच ॥ कथं स्तवो मनुष्यस्य विधिनात्र कृतो

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

सुवि ॥ कुत्सितः संशयोऽप्यत्र वत्सत्वात् वत्सलोऽवदत् ॥ २४ ॥ वत्सल उ-
वाच ॥ बालोऽसि मूढ मंद त्वं किं वदिष्यसि नीचवत् ॥ न शास्त्रदृष्टिर्नो वाक्यं
नात्मनिश्चय एव वा ॥ २५ ॥ न तस्य संशयच्छेदो नात्र चैव परत्र वा ॥
तथापि कल्पनाऽकार्या लीलामानुषविग्रहे ॥ २६ ॥ विधिस्तु विष्णुपूजार्थं ब-
दर्यादिभुवं स्वयम् ॥ आयास्यति न किं तत्र यत्रयत्र हरिः स्वयम् ॥२७॥ दत्तं
दुर्वाससं सोममात्मेशब्रह्मसंभवात् ॥ दत्तो विष्णुः स्वयं साक्षात्तत्स्तवे किमु संशयः
॥ २८ ॥ सर्वदेहेषु देवानां विना वातेन चेतना ॥ यस्य नास्ति स्वतो बुद्धि-
र्विधाता तस्य नास्ति वै ॥ २९ ॥ अतस्त्वबुधप्रश्नस्य कोत्तरं मौनमेवच ॥ दी-
नस्तु प्रार्थयामास शिक्षाविधिरलं ततः ॥३०॥ कथापीयूषमधुरे मास्तु दुर्विषमं-
तकम् ॥ ततः कथनमारेभे श्रीगुरोस्तेजसः फलम् ॥३१॥ तदा ग्रहा दैवताद्याः
शुभस्थाः सुप्रसन्नकाः ॥ ३२ ॥ सुजनानां मनांस्यासन् प्रसन्नानि परेवरे ॥
यस्य वातसुखस्पर्शात्समाधेरपि विस्मृतिः ॥ ३३ ॥ तस्य साक्षात्कृतस्यास्य दांप-



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

त्यस्य कुतः स्मृतिः॥ यथा स्वात्यंबु सत् शुक्तौ कठिणत्वाच्च मौक्तिकम्॥ ३४॥
तथा नेत्यपि तत्तेजो माणिक्यं संबभूवह॥यथा स्तंभान्नृसिंहोऽभूद्यथाब्जः क्षीरसा-
गरात् ॥ ३५॥ तथा पूर्णतिथौ पूर्णश्चाविरासीत्सुपुष्कलः ॥ नेदुर्दुंदुभयस्तत्र वव-
र्षुः पुष्पवृष्टयः ॥३६॥ विमानदर्शनं पुण्यवतामेव हि जायते ॥३७॥ सत्त्वाज्जया-
द्देवगणप्रमोदः पापापनोदाद्भवि मोदवादः ॥ भाराघविध्वंसननागमोदो लोक-
त्रयामोदकमाणिकोभूत्॥३८॥इति श्रीमननादिसिद्धचरितामृताब्धिसारे भवदव-
धान्वंतरे दीनवत्सलसंवादकरे माणिकप्रभाकरे तृतीयमयूखः ॥ ३ ॥

॥ श्री० ॥ सकलहृत्पद्मसद्मप्रभाकरमाणिकाय नमः ॥ श्रीगुरुवरवरदाय
नमः ॥ दीन उवाच ॥ नाथनाथ दिनानाथ जगन्नाथ कथामिमाम् ॥ अथ
गाथादि कथय पृथुकोत्थितसत्पथाम् ॥ १ ॥ यत्र त्रिभुवनं जातं मोदाब्धौ
मग्नमुत्सुकम् ॥ जातकर्मादिश्रवणे दीनस्य किमु संभ्रमः ॥ २ ॥ तथापि जी-
वनं तस्य तदेवेति प्रबोधय ॥ यदानंदाब्धिमग्नस्य दांपत्यस्य कथं स्मृतिः॥३॥

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

तेने ततश्च तत्प्रश्नात्तर्तुं तत्तृषितप्रजा ॥ वत्सल उवाच ॥ तेन चालिततच्चित्ता-
त्स्मृतिमाप मुदान्वितम् ॥४॥ ततस्तं प्रणिपत्याह भ्राजमानमबाधितम् ॥ माक्ष-
षीष्ट महाराजन्नित्थं रूपमचाक्षुषं ॥५॥ नोत्सहे न सहे द्रष्टुं प्रष्टुं कं यामि सां-
प्रतम् ॥ त्वमेव बालको भूत्वा पालको जगतो भव ॥ ६ ॥ मनोहरवचः श्रुत्वा
शुचः परिमृजन्निव ॥ दर्शयामास तत्रैव स्वयं शशिनिभं शिशुं ॥ ७ ॥ ततो मो-
दान्नामकर्म चक्रतुस्तौ मुदान्वितौ ॥ तेजःपुंजादहर्क्षत्वान्मांगल्यादप्यमौलिकात्
॥ ८ ॥ मणिचूलादि संस्थानान्महायोगस्वरूपतः ॥ हेतुहेत्वंतरेणापि माणिकेति
प्रतिष्ठितम् ॥ ९ ॥ जातकर्मादिसंस्कारैस्तत्संभ्रमसुविभ्रमैः ॥ वसुदेवैव(?)न क्रम-
मसंख्यं बहु भूरिशः ॥१०॥ संकल्प्य सर्वजातिभ्यो दानानि द्रव्यराशयः ॥ तत्संक-
ल्पस्य संपूर्तिः पूर्णेनापि दुरालभा ॥ ११ ॥ अतो दत्तस्य जनकः शोभते वै
मनोहरः ॥ ततः किंचिद्बाललीलां प्रदर्श्य स्वस्य सिद्धताम् ॥ आदौ धावन्नु-
दरतो रिंगन् तुंगन् तरंगवत् ॥ १२ ॥ तत औत्थानिकं कर्म कुर्वन्सर्वानतोष-



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

यत् ॥ अकुर्वन्नप्सराद्याश्च पदाक्रमणनर्तनम् ॥ १३ ॥ बालवाण्या बालकांश्च बोधयामास बाल्यतः ॥ पूज्योहं पूजकश्चात्र जीवब्रह्मसनातनः ॥ १४ ॥ तमद्भुतं बालकं च श्रुत्वा जातककत्थने ॥ प्राप्ताः सामुद्रिकाभिज्ञा ज्यौतिषाद्याः प्रतिज्ञया ॥ १५ ॥ तत्सामुद्रिकचिह्नानि लवात्प्रचलितानि च ॥ दृष्ट्वा दृष्ट्वा वेष्टयित्वा पुस्तकं प्रणमंत्यतः ॥ १६ ॥ तथैव ग्रहचक्रं तु चक्रवत्प्रेक्ष्य ज्यौतिषाः ॥ तितीर्षाशां तेपि मुक्त्वा प्रणमंतिस्म मूकतः ॥ १७ ॥ यच्चक्रं सुस्थिरं यत्र भ्रमते भ्रामयत्यपि ॥ स्वयं भ्रमत्कालचक्रे कालज्ञानं क्व कत्थनम् ॥ १८ ॥ एवं ते गतगर्वा वै गता भ्रांताः ससंभ्रमात् ॥ यस्माद्भविष्यं सर्वं यत्तद्भविष्यं तु को वदेत् ॥ १९ ॥ पंचभूतगणादेवारितिपूजां चकार सः ॥ तदा कश्चिद्दरिद्रस्तु सुभक्तः प्रणनाम च ॥ २० ॥ हे बालरत्नसुभग पूजया किं फलं भवेत् ॥ तवापेक्षा किं फलस्य दरिद्रो याचयद्धनम् ॥ २१ ॥ पूजारोचेत्त्वयाप्यत्र लभ्यसे पश्य कामनाम् ॥ इति तद्वाक्यतो भावं निधाय हृदि तत्क्षणात् ॥ २२ ॥



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

पूजासंभारमानीय तस्थौ प्रांजलिरग्रतः ॥ वनं नीत्वा पूजयित्वा तत्रापश्यद्धनं
बहु ॥२३॥ सोपि संगृह्य भूदेवाद् देवोयमिति चाब्रवीत् ॥ पूजां विदधिरे सर्वे त्रस्तौ
गंतुं मनोदधे ॥ २४ ॥ औदर्यरत्नविरहादिति विव्हलितौ भृशम् ॥ तदा गुरुः
सांत्वयित्वा त्वन्यं नृहरिरूपतः ॥ २५ ॥ साध्येतां सर्वकार्याणि पारंपर्याग-
तान्यपि ॥ पुनश्च त्वद्बाललीलां दृष्ट्वा तृप्तिर्न चास्ति हि ॥ २६ ॥ तस्मादनु-
पनीतस्त्वं त्यक्तुमुत्सहसे कथं ॥ तयोस्तत्प्रेमसंरंभात्स्वांवतातानुलापकः ॥२७॥
व्यापकोऽध्यापकोऽध्येता सर्वकर्ताप्यरंजयत् ॥ यस्यानुग्रहमिच्छामि तस्य सर्वं
हराम्यहम् ॥ २८ ॥ इति दारिद्र्यविभवैः पूरितावपि चक्रतुः ॥ तयोस्तस्योप-
नयनोद्योगं ज्ञात्वा च दैवताः ॥२९॥ सर्वसाहित्यसंभाराः संग्रहाश्च ससंभ्रमाः ॥
गायत्री सा मूर्तिमती सावित्री च सरस्वती ॥ ३० ॥ मंडपं गीतवादित्रऋ-
षिमंत्राष्टकैर्वृतम् ॥ भोजनोपहारपूर्वं तु दक्षिणातांबुलादिकम् ॥ ३१ ॥ लक्ष्म्या-
द्युवतयश्चासन्सर्वे द्रष्टुं महोत्सवम् ॥ इत्थं तदुत्सवं वक्तुं कः शक्तो दिवि



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

वा भुवि ॥ ३२ ॥ दोर्दंडमेवास्य च ब्रह्मदण्डं तुंडाक्षराण्येव च मंत्रकुंडम् ॥ अखंडदंडोद्धृतब्रह्मचर्यव्रतप्रचंडं मणिमीड्यमीडे ॥ ३३ ॥ इति श्रीमननादि सिद्धचरितामृताब्धिसारे भवदवधान्वंतरे दीनवत्सलसंवादकरे माणिकप्रभाकरे चतुर्थो मयूखः ॥ ४ ॥

दीन उवाच ॥ दीनो लीनो भवत्पादनलिने मलिनोप्यलम् ॥ अलिभूतेलित्कूले लेलिहानो मिलिंदकम् ॥१॥ त्वमेव मूलकमलमालिन्वत्सल स्वस्थले ॥ कथालोलस्य कथय पलमेकं युगायते ॥ २ ॥ औत्कंठितस्य दीनस्य वत्सलोप्यनुवादयत् ॥ वत्सल उवाच ॥ ततो गुरुः समारंभैः प्रेमसंरंभसंस्थितान् ॥ स्वे स्वे कार्ये नियुज्यैव स्वयं च वनमाविशत् ॥ ३ ॥ बद्धवेषधरो धीरः साधूनां बोधने पटुः ॥ ४ ॥ अटमानोऽमृतं कुंडं वाल्मीकाश्रममंडितम् ॥ तत्र विश्रम्य योगींद्रो द्रुममूले सुशीतले ॥ ५ ॥ प्राप्ताश्च साधकाः सर्वे यत्र रूपमलौकिकम् ॥ केवलं योगरूपं वा ज्ञानरूपं न विद्महे ॥ ६ ॥ स्मृत्वा दत्तवचः पूर्वं प्रभुं शरण-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

मायशुः ॥ भो प्रभो पाहि सर्वात्मन् मग्नान्साधनसागरे ॥ ७ ॥ समुद्धर म-
हायोगिन् बहुकालतृषार्दितान् ॥ मंदस्मितमुखांभोज द्विजराजिविराजितः
॥ ८ ॥ रराज राजराजासौ परिव्राजैः सुपूजितः ॥ साधकांश्च समालोक्य
यान्यान् यस्य यथाप्रियान् ॥ ९ ॥ तान् तान्समादिशत्सद्यः सांख्ययोगविनिश्चि-
तान् ॥ मंत्रसिद्धिर्ज्ञानसिद्धिरौषधीनां तथैव च ॥ १० ॥ सर्वापि सिद्धयो
यस्मात्स्वतःसिद्धस्य सुक्ष्माः ॥ सर्वमुख्यो ज्ञानयोगस्तत्रापि सूक्ष्मसंशयाः ॥ ११ ॥
तेपि संदर्शनादेव किंचान्येषां विमोचनम् ॥ परिहृत्य संशयाधिं सर्वेषां सि-
द्धिमातनोत् ॥ १२ ॥ तुष्टुवुस्तेपि संहृष्टा देवर्षिसिद्धसाधकाः ॥ देवर्षिसिद्ध-
साधका ऊचुः ॥ प्रणवादिनमोंतेन स्तव्यंते वेदरूपतः ॥ १३ ॥ भक्तकार्ये पारिजातो
गुरूणामेकराट् तथा ॥ योगिनां च प्रजानां च प्रजापालनहेतुतः ॥ १४ ॥
सर्वस्माच्च शतानंदस्तस्माच्छतगुणाधिकः ॥ अतस्त्वेकादद्वयोपि यत्र भेदो न
लौकिकः ॥ १५ ॥ अभेदोप्यंजनाभावान्नैर्मल्याच्च निरंजनः ॥ निरंजने गुणाः



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

क्रमे निर्गुणोऽ नवलंबनात् ॥१६॥ अतींद्रियाच्च वा ग्राह्या निरालंबो हि सर्वतः॥
परिपूर्णस्त्वखंडश्च मतानेकस्य स्थापकः ॥ १७ ॥ सर्वज्ञत्वात्सद्गुरुश्च यस्मात्प्र-
भवति प्रभुः ॥ मीयंते मततत्वानि यस्मान्माणिकरुच्यते ॥ १८ ॥ मामाया
ध्वांतरूपस्य निप्रस्तुतया क्षणात् ॥ कः प्रकाशयते यस्मात्तस्मान्माणिकनामतः
॥ १९ ॥ अतः प्रभो त्वं च जय पुनर्जय पुनर्जय ॥ इति सिद्धार्थस्तवना-
द्विचार्य गुरुराट् स्वयम् ॥ २० ॥ प्रत्येकं वदतानेन कदा मुक्तिः कथं भवेत् ॥
तस्मात्स्तवादेव सर्वं प्राप्नुवंतु मनीषिणः ॥ २१ ॥ ये ये यथा भावुकाश्च यथा
कामाभिलाषिणः ॥ अनेन चेत्सदा स्तौति ध्यायते वा विचार्यते ॥ २२ ॥ कि-
मु तस्य फलं वक्ष्ये मम रूपं भविष्यति ॥ अतस्तेनैव सर्वेपि स्वस्वसिद्धिं गताः
पराम् ॥ २३ ॥ स्वंस्वमाश्रममाजग्मुः स्तवमाना मुहुर्मुहुः ॥ कंदमूलफलाहारी
ब्रह्मचारी चराचरम् ॥२४॥ पश्यन्पश्यन्वनान्यादौ त्रिपुरांतकमाययौ ॥ विकसत्कं-
जकिंजल्करंजिद्भृंगारवान्वितम् ॥२५॥ अलिकुंजद्विजव्राजकूजद्राजिविराजितं ॥

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

भ्राजमानो विरेजेत्र सिद्धजंगमपूजितः ॥ २६ ॥ सिंजन्तन्मतबीजानि कं- 
जाक्षो रंजयत्प्रजाः ॥ कुंडलेश्वरमासाद्य तत्रापि ब्रह्मराक्षसम् ॥ २७ ॥ उद्धार-
यित्वा स्तुत्वा च सांबमंबापतिं ततः ॥ स्वाश्रमं सहजानंदमठं ताटस्थलक्षणं
॥ २८ ॥ तस्थौ तत्र निजानंदसंदोहपरिबृंहितः ॥ दीनः सिंहावलोकेन संश-
यापन्नमानसः ॥ २९ ॥ नरसिंहस्य किं रूपं कथं क्वात्र स्थितिं वद ॥ वत्सलः
पुनरप्याह यथात्रैरूपसंस्थितः ॥ ३० ॥ दुर्वासो हनुमन्नाम्ना सोमोऽभून्नारसिंहतः ॥
तपस्वी हनुमानाभून्नरसिंहस्तु वंशिकः ॥ ३१ ॥ तेपि सर्वे गता यत्र कल्याणं
निजमंदिरे ॥ सोमेश्वरस्य निकटे सिद्धमंडलमंडिते ॥ ३२ ॥ सर्वे गत्वा स-
मानिन्युः प्रभुः स्वार्थार्थसिद्धये ॥ तदेव निजकल्याणं तदेव निजमंदिरम् ॥ ३३ ॥
यत्र श्रीप्रभुपादाब्जं सर्वसिद्धिप्रदायकं ॥ इत्थं कल्याणनिलये प्रभुः कल्याणवेष-
भृत् ॥ ३४ ॥ कल्याणार्थं प्रार्थितस्तु तदाकल्याणमातनोत् ॥ गुरुः पूर्ववचः 
स्मृत्वा सांत्वितं स्वस्य विक्लवं ॥ ३५ ॥ तत्रालंकृतसद्गेहे मंडपाद्यैः सुशोभिते ॥

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

नृसिंहस्योपनयनं चकार विधिपूर्वकम् ॥ ३६ ॥ तथा त्रिपादत्रिपदा हृदा
हृदयपुष्करे ॥ गुरुणादेशिता शीर्षिण निधाय करपुष्करम् ॥ ३७ ॥ पुष्कल-
त्वान्नृसिंहस्य हृत्पुष्करविकासनम् ॥ कलाभूतस्य सकलमन्येषां दुष्करो गुरुः
॥ ३८ ॥ ब्रह्मदण्डेन षट्शत्रून् दंडयित्वा प्रचंडितान् ॥ खंडयित्वा संशयाधिं
साष्टांगं प्रणनाम सः ॥ ३९ ॥ सिंहो जगर्ज सर्वेषां मार्जयित्वा मदांधताम् ॥
सिंहोवाच ॥ त्वं गुरुस्तु ममैवात्र नान्येषां शिष्यभावतः ॥ शिष्याभावान्नास्ति
गुरुः प्रतिज्ञैव ममोर्जिता ॥ ४० ॥ परिणमति च तत्र शिष्य एवात्र चित्रं
नहिनहि गुरुशब्दः क्के गुरौ(?)शब्दबोधः ॥ विबुधबुधविशुद्धाः सिद्धमेवानमंति
न नमति विबुधेषु सोप्यधः संपतेद्धै ॥ ४१ ॥ इति गर्जनया सर्वे वाणीरोधाद-
धोमुखाः ॥ तिष्ठंतिस्म यथा मूकाः शुका वा किंशुके बकाः ॥ ४२ ॥ पुनराह
यदा मिथ्या मम वाणी प्रबोधिका ॥ अहमेवोपनीतः किं चान्येषां त्रिपदा न
किं ॥ ४३ ॥ बद्धाश्चेदुपदेष्टारः शिष्याः कुर्वंति किं यतिम् ॥ तस्मात्तथापि

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

वैशिष्ट्यं गुरावेव गुरुत्वतः ॥ ४४ ॥ इति वाक्याद्गुरुरपि चोत्थाप्यालिंग्य हर्षतः ॥ स्वीयवाक्याच्च गार्हस्थ्यं कारयामास वै तदा ॥४५॥ निवृत्तिमार्गे निरतः कथं प्रवृत्तिमाचरेत् ॥ तथापि गुरुशिष्याणां लक्षणं वद सुव्रत ॥ ४६ ॥ विदेहिते स्वानुभूतौ तदाभूदशरीरभाक् ॥ देहस्वीकरणात्पारतंत्र्यमेव हि लक्षणम् ॥ ४७ ॥ विदेहे देहकार्यं च स्वतंत्रं गुरुलक्षणं ॥ तेनैव जागृतिं कृत्वा पुनर्गार्हस्थ्यमातनोत् ॥४८॥ संस्थाने स्थाप्य तस्यैवमघटं घटकः स्वयम् ॥ तदंशत्वात्स्थितिं तत्र तेषां को वदते ततिम् ॥४९॥ जयतु जयतु जेता नित्यकल्याणधाम्नि जयतु जयतु ज्ञाता ज्ञानिहृज्ज्ञानव्योम्नि ॥ जयतु जयतु दीनोद्धारको दीननाम्नि जयतु जयतु भूमौ सर्वदा स्वे महिम्नि ॥५०॥ इति श्रीमदनादिसिद्धचरितामृताब्धिसारे भवदवधान्वंतरे दीनवत्सलसंवादकरे माणिकप्रभाकरे पंचमो मयूखः ॥ ५ ॥

दीन उवाच ॥ दत्ताश्रितकथागाध धनधार्मिकवत्सल ॥ हीनत्वाद्दीनना-



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

माहं याचते त्वां मुहुर्मुहुः ॥ १ ॥ धनमौदार्यमेकत्र त्वद्विना नहि कुत्रचित् ॥ अतः प्रभो देहगेहे ममाशु भर तद्धनम् ॥२॥ वत्सल उवाच ॥ अघाचलं प्रचलितुमचंचलमपि स्फुटम् ॥ स्फुटीभवं माणिकोत्र मणिगोत्रेऽत्रिनंदनः ॥ ३ ॥ कर्मज्ञानोपासनादिस्थापनार्थमतः प्रभुः ॥ पुनर्जगाम सर्वेषां मनोभीष्टार्थसिद्धये ॥ ४ ॥ नागसीमोपग्रामादौ श्रोत्रियेणार्थितो गुरुः ॥ वसन्तत्र ब्रह्मक्रतून् कारयामास धार्मिकः ॥५॥ तत्र कालवशात्क्षुब्धमग्निं संशांतयत्तथा॥ कालसर्पेण संदष्टं पुनरुज्जीव्य विप्रतः॥ ६॥ अभिरक्ष्य च सत्कर्म संस्थाप्य कृतसंस्तवः॥ सर्वान्संबोध्य तद्ब्रह्म चालकाख्यपुरं ययौ ॥ ७ ॥ तत्र त्वं चालकोसीति तच्चरित्रविकत्थनैः ॥ अष्टकादिस्तवैः स्तुत्वा लोककष्टान्यवारयत् ॥ ८ ॥ हनुमान् तत्स्तवैर्भक्तान् सत्वरो वरदोऽभवत् ॥ इत्थं परस्परानंदसंदोहमभवत्तदा ॥ ९ ॥ आजगाम ततो क्षेत्रं प्रेमपूरमनोरमम् ॥ यथा भृगुः परीक्षार्थं विष्णुवक्षस्यताडयत् ॥ १० ॥ तथा प्रभुं मानवेति धिक्कुर्वंस्तत्र वै द्विजाः ॥ ततस्तदा मल्ल-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

॥ ११ ॥ देवो गुरोः स्वात्मा हि केवलः ॥ ११ ॥ इति सर्वान् ज्ञापयितुं ददौ सर्वं स्ववैभ-
वम् ॥ पुनस्ते सर्वभूदेवाः प्रभुं शरणमाययुः ॥ १२ ॥ मल्लारिस्तु त्वमेवासी-
त्येवं संप्रार्थ्य भावतः ॥ शिबिकायां समारोप्य प्रभुं तु विभवैः सह ॥ १३ ॥
देवालयं ततो गत्वा जनैः सह तदास्तुवीत् ॥ महात्म्येनाष्टकेनापि स्तवैरन्यै-
रनेकशः ॥ १४ ॥ सर्वांस्तद्भजनानंदतीर्थमग्नानथाकरोत् ॥ मल्लारिः परितुष्टात्मा
स्वयमालिंगयत्तदा ॥ १५ ॥ तदानंदविनोदस्तु तज्ज्ञो वै प्रविजानति ॥ तत-
श्चागान्मूललिंगं तत्रातिष्ठत्प्रमोदतः ॥ १६ ॥ तत्र कश्चित्कुटुंबस्थो वैश्योऽसीद्गुरु-
भक्तिमान् ॥ गुरुनाम्ना वंचकस्तं कुटुंबैः स्वजनैः सह ॥ १७ ॥ रुद्रकुंडे पति-
त्वा तु मल्लारिचरणाद्बहिः ॥ विनिर्गम्य व्रजन्मोक्षं यस्य श्रद्धा हि तादृशी
॥१८॥ तथेत्युक्त्वा स वैश्योपि गुरुणा स्वजनेन तु ॥ वाद्यगीतैश्च भजनैराययुः
कुंडसन्निधिम् ॥ १९ ॥ पतित्वा गुरुणा सार्धं मम्रिरे कालकर्मतः ॥ तत्रैका क- ॥ ११ ॥
न्यका कुंडान्निर्गता पूर्वपुण्यतः ॥२०॥ सा तु सद्गुरुपादाब्जे भृंगवत् इंगिता तदा ॥

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

स्त्रियो विमुक्तिर्नैवेति कस्मात्प्राप्ता तवांतिकम् ॥ २१ ॥ अतः प्रभो इदं याचे दातारं तव संनिधिं ॥ कुतस्तासां नैव मुक्तिः पश्चायां च कथं नहि ॥ २२ ॥ प्रभुः कृत्वा तदा हास्यं बलाभावादनिश्चयात् ॥ तद्दलं त्वयि चेल्लोकलज्जां त्यक्त्वेह संनिधिं ॥ २३ ॥ इतिकारुणिकस्तत्र सर्वानुद्धारयन् विभुः ॥ पर्वतांतरसंलीनान् कलिवातस्य भीतितः ॥ २४ ॥ गुप्तो भूत्वा स्वयं कृत्वा दर्शनेन कृतार्थतान् ॥ सर्वेषां प्राणवत्प्रेष्ठस्ततस्ते विविशुर्वनम् ॥ २५ ॥ स्वजनव्यथया व्यग्रः सर्वगोऽप्य-क्षिगोऽभवत् ॥ तत्र श्रांतान् क्षुधार्तांश्च तृषार्तांस्तोषयज्जनान् ॥ २६ ॥ पाकं वि-धायोदकार्थं तीर्थमुत्पादयत्क्षणात् ॥ सर्वान्संतर्प्य सर्वेषां दोषाणां विनिवारकं ॥ २७ ॥ माणिकाख्यं तीर्थमभूत्तत्र विश्रम्य निर्ययौ ॥ एवं लीलाविहारोसौ केतकीसंगमेश्वरम् ॥ २८ ॥ तत्र गत्वा श्रोत्रियेण प्रार्थितोपवनेवसत् ॥ तदु-त्कर्षमसह्या ये ईश्वरे कृतनिग्रहाः ॥ २९ ॥ प्राणत्यागावधिं दृष्ट्वा संगमेशोब्रवी-त्क्रुधा ॥ सांप्रतं मां तु ज्ञातव्यं निश्चितं माणिकेश्वरम् ॥ ३० ॥ जिजीविथ

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

विनातन्न तस्मात्ते शरणं ययुः ॥ ईश्वरोपि च तैः सार्धं कुंडं कृत्वा सुनिर्मलम् ॥ ३१ ॥ देवालयं ततो गत्वा तर्पयित्वा बहून् जनान् ॥ संगमेशस्य माहात्म्यात्कुटिलानप्यमूमुचत् ॥ ३२ ॥ इति विहरणतोसौ सर्वदेवैकवंद्यो दृषद्मयसुरेशानेवते ज्ञापनार्थं ॥ इति त्रिविधजनानां कर्म त्रैविध्यमेतद्विहरति गुरुराजो स्थापयन् तत्रतत्र ॥ ३३ ॥ इति श्रीमननादिसिद्धचरितामृताब्धिसारे भवद्वधान्वंतरे दीनवत्सलसंवादकरे माणिकप्रभाकरे षष्ठमयूखः ॥ ६ ॥

दीन उवाच ॥ अगाधानवगाह्यापि कर्णधाराच्च कर्णयोः ॥ करणत्वात् कर्मणश्च कर्णिकावदपेक्षते ॥ १ ॥ या कथा कथिता पूर्वं श्रीगुरोः क्षेत्रसंचरा ॥ कलिभ्रमहरा सा तु यत्र प्रत्यक्षदेवता ॥ २ ॥ तथा कृत्वादि सत्कर्म तद्ब्रह्म चापरोक्षितम् ॥ अयं सत्वात्मको धर्मो वेदाचार्याद्धि स्थापितः ॥ ३ ॥ पूर्वमंगीकृतं सर्वमतानां स्थापनं यतः ॥ अतः स्वभावदुष्टानां यवनानां कथं त्वितः ॥ ४ ॥ वत्सल उवाच ॥ सुष्टुदुष्टा हि सर्वत्र तेषामेवैतिको भ्रमः ॥ स्थापनं



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

नाम किं यस्य यद्रूपं तत्प्रदर्शनम् ॥ ५ ॥ यन्मूलं ब्रह्म सर्वेषां निराकारं तदु-
च्यते ॥ तदेव सर्वैः सर्वत्वाद्वर्णितं स्वस्वभाषया ॥ ६ ॥ तदप्यग्रे वच्मि किंचिद-
वाच्यादप्यरूपतः ॥ किंचिन्नाम न चाल्पत्वं स्वानुभूत्यैव केवलं ॥७॥ शृण्विदानीं
दीनवत्स ततः किमकरोद्विभुः ॥ पूर्वं यत्प्रार्थितं म्लेच्छैस्तत्स्मरन्नभ्यगात्ततः
॥ ८ ॥ पूर्वं स्थलं नृसिंहस्य जलरूपेण धिष्ठितं ॥ तत्र तेनैव रूपेण संतिष्ठद्दुष्ट-
वारणे ॥ ९ ॥ यत्रैकं दारुणं रूपं सर्वेषां भीतिदायकम् ॥ उच्चचाल स्वयं यत्त-
त्संनिकृष्टं न दूरतः ॥ १० ॥ यत्र यत्रोत्कृष्टरूपं जगता परिवेष्टितम् ॥ तथापि
राजधानी सा यं तु राजाधिराट् स्वयम् ॥ ११ ॥ यत्र प्रजाप्रसंख्याने गम-
नागमनादपि ॥ यावद्भूमिकणा न्यूनास्तेत्रान्योपमितास्ति वा ॥ १२ ॥ कुतिस-
ताना कुतर्कोत्र प्रासैकेन निवारणम् ॥ रजोधिका मनुष्याश्चेत्तेषां स्थितिः कथं
त्विति ॥ १३ ॥ यथा त्रिविक्रमस्यास्य पादेनासे भुवस्त्रयम् ॥ तत्र दाता
गृहीता वा स्थितः क्वात्र यथा तथा ॥ १४ ॥ एवं तत्र प्रवितता राजधानी



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

पृथक् पृथक् ॥ नाट्यशाला पाकशाला विशालाट्टेन शोभते ॥ १५ ॥ अष्टा-
दशादिवर्णानां मतानामेकराट् प्रभुः ॥ तत्र तावत्कर्मठानां यवनानामभूद्विषम्
॥ १६ ॥ तेन ते तु विचार्यैवं केनापि ह्यनिवारकः ॥ यतः सर्वमतस्थत्वात्सर्व-
भक्षस्ततोऽभवत् ॥ १७ ॥ नान्योपायोऽस्ति वै तत्र मांसमानीय यत्नतः ॥
पिधाय तद्गृहीत्वा तु प्रभोरंतिकमाययुः ॥ १८ ॥ तत्तेजः प्राज्यमतुलं दृष्ट्वा
प्रष्टुं विलज्जिताः ॥ सर्वांतर्यामी भगवान् सर्वसंशयवारकः ॥ १९ ॥ सर्वेषां पश्यतां
तेषां सर्वदेवोऽब्रवीद्वचः ॥ यूयं किं कर्मकर्तारः किमर्थं कर्मसंग्रहः ॥ २० ॥ अल्ला-
शब्दस्य ज्ञानार्थं कथमर्थो हि ज्ञायते ॥ अकारो वासुदेवः स्याल्लुयिच्छेदनधा-
तुतः ॥ २१ ॥ वासनाद्वासुदेवस्य तद्बीजाद्वासनाभिदः ॥ अतश्चावासनाख्यां
च लुनाति छेदयत्यपि ॥२२॥ निर्वासनात्तु तच्छब्दो निर्विकल्पक उच्यते ॥ यद्वा-
नञ्समासेन नास्ति च्छेदो हि यत्र वै ॥ २३ ॥ छेदाभावो निराकारो निराकारः
स एव तु ॥ न च लाति प्रगृह्णाति ह्यकर्तृत्वादपि स्फुटम् ॥२४॥ यद्वा अं ब्रह्म-



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

वाची स्याल्लकारोऽमृतमीरितं ॥ मुक्तब्रह्मणि किं कर्म तत्र शंका प्रवर्तते ॥२५॥
अल्ला ब्रह्म कथं वाच्यं किमायातं च तन्मतात् ॥ यतः श्रुत्या चाभिहितं भाट्टे-
नापि यथा खलु ॥ २६ ॥ सर्वनामप्रवृत्तिश्च ब्रह्मण्येव च मुख्यतः ॥ आसमंता-
त्काशयति यथाकाशो हि ब्रह्मणि ॥ २७ ॥ परिहृत्यैकशंकां तु द्वितीयापि च
वार्यते ॥ तन्मतेनापि तच्छब्द एवमेव च गीयते ॥ २८ ॥ अकारश्चाकृतौ
प्रोक्तो लकारो नास्ति वाचकः ॥ न चैकेन प्रकारेण निराकारो निरूप्यते ॥
॥ २९ ॥ तज्ज्ञानार्थं कथं कर्म साकारं तु स कामुकं ॥ अल्लाकृतिविहीनत्वा-
न्निराकारो हि तन्मतात् ॥ ३० ॥ निराकारात्कर्मणोपि कथं साकारभक्षणं ॥
अतः कोऽसौ पशुस्त्वत्र ग्रासोपि कस्य भाषते ॥ ३१ ॥ तद्विबोधक्रोधपशुरवि-
चारोत्र चामिषं ॥ तद्वधो भक्षणं तस्य स्वयं कृत्वा च कारयेत् ॥ ३२ ॥ इति
तद्भाषया तस्य प्रमाणेनानुभावतः ॥ बोधयामास तच्छ्रुत्वा सर्वे ताटस्थ्यतां
गताः ॥ ३३ ॥ मुद्रानिद्रानिमित्तेन सर्वे ते स्वेष्टदेवताः ॥ मूर्तिमत्यः प्रभोराज्ञां

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

सेवंत्यो ददृशुः पुनः ॥ ३४ ॥ तेपि शिष्यान् प्रपौत्रांश्च बोधयंतो हि चुक्रुधुः॥
यूयं तु बत बालिशाः स्वयमेव प्रभुर्गुरुः ॥ ३५ ॥ अतोऽस्माकं च विभवं दत्वा
गतिमवाप्स्यथ ॥ इत्थमाज्ञां च प्रत्यक्षां गृहीत्वा मेनिरे परं ॥ ३६ ॥ मुख्यस्था-
नाच्च म्लेंच्छानां मुख्यचिन्हानि ते ददुः॥ तदा प्रभुः सर्वसाक्षी शुद्धोंतश्च बहिः
शुचिः ॥ ३७ ॥ भवतीति ज्ञापयितुं दातव्यं पूर्वमामिषं ॥ तदाज्ञया वेपमानाः
स्वमंत्रैर्विनिवेद्य च ॥ ३८ ॥ वेष्टनं दूरतः कृत्वा दृष्ट्वा शुद्धां च शर्कराम् ॥ मुमु-
दुर्मुक्तसंकल्पाः सर्वान् दत्वाभिवंद्य च ॥ ३९ ॥ आज्ञां गृहीत्वाभिजग्मु-
र्दृष्ट्वा दृष्ट्वा पुनः पुनः॥ एवं ब्रह्मांडमार्तंडो नंदमानंद्य वै ततः ॥४०॥ तांडवी-
कृतमार्तंडक्षेत्रे सोंतर्दधे पुनः ॥ अंतर्धानं भगवतस्तस्य जीवस्य वै भवेत् ॥४१॥
आविर्भावो भगवतस्तस्य जीवस्य चैव हि॥ यस्याविद्याकृतं सर्वं दृश्यते तन्न
दृश्यते ॥ ४२ ॥ यस्य प्रभोः कृपादृष्टिः सृष्टिर्दृष्टेर्न याति च ॥ दृश्यादृश्यं तु
जीवस्य नोभयं गुरुसन्निधौ ॥ ४३ ॥ यथावकाशमाकाशे प्रकाशकगुरुस्ततः ॥



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

यत्र यत्र यथा भक्ताः स्मरंति च तथानुगाः ॥ ४४ ॥ भक्तार्थोद्भूतहृदयो गत्वोग्रं
भालकेश्वरम् ॥ तत्राप्यत्युग्रसंव्यग्रग्रस्तान् लोकानशिक्षयत् ॥ ४५ ॥ तत्र
कश्चिद्दृषद्भूत्स्वजनैः परिपीडितः ॥ लिंगं गतं तत्र तीर्थे शोधने केपि साह्यतः
॥ ४६ ॥ आहूताः प्रभुणा सर्वे भवंतोनैव चागताः ॥ तदा ते चिह्नहीनाः स्युः
स्वदेवं शरणं ययुः ॥ ४७ ॥ इदं सर्वं प्रभोस्तत्र इति नंदीश्वरोऽब्रवीत् ॥ तथा
बलेश्वरमपि कष्टदूराष्टकैर्मिथः ॥ ४८ ॥ संलापयन् स्वभक्तानां कार्यं कृत्वाति-
हर्षतः ॥ दृषद्धरं वटं दत्वा न्यवर्तत ततः प्रभुः ॥ ४९ ॥ पूर्वस्थानानि भक्तांश्च
पश्यन्नुद्धर्तुमुद्यतः ॥ अतो जगाम तत्क्षेत्रं भर्जाभीमादिसंगमं ॥ ५० ॥ यत्र
श्रीयतिराज्ञश्च नारसिंहसरस्वतेः ॥ शोभते सन्निधौ यस्य विश्रम्याश्रमसंश्र-
यः ॥ ५१ ॥ तत्रापि निजभक्तानां साक्षाद्दर्शनमिच्छतां ॥ तद्वदन्पूरयन्
कामान् बोधमाबोधयन् बुधः ॥ ५२ ॥ भीमाकूले तु स्वस्थानाद्दिनानि कति-
चिद्वसन् ॥ बहुकालादागतस्य बहुभक्ता हि भुंजते ॥ ५३ ॥ कश्चिद्देवणासि-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

मा॰ प्र॰ ॥१५॥

द्धेन प्रार्थितो भक्तमोचने ॥ अन्विवेष ततस्तत्र तेनासौ परितोषितः ॥ ५४ ॥
भानुकुंडस्य निकटे यवनेन दुरात्मना ॥ काराागारे रोधितं तं शरणं परिमोच-
यत् ॥ ५५ ॥ शरणागतलोकानामखंडेश्वरस्थापनं ॥ कृत्वा पुनः स्वकल्याणं
कर्तुं गंतुं मनोदधे ॥ ५६ ॥ इति श्रीमदनादिसिद्धचरितामृताब्धिसारे भव-
दवधान्वंतरे दीनवत्सलसंवादकरे माणिकप्रभाकरे सप्तमो मयूखः ॥ ७ ॥

श्रीमाणिको विजयते ॥ श्रीगुरुर्जयति ॥ दीन उवाच ॥ इदानीं श्रोतुमि-
च्छामि गुरूणां वसतिः क्व च ॥ बालिशवद्बालवाणीं श्रुत्वोचे बालभास्करः
॥ १ ॥ वत्सल उवाच ॥ वृंदावनफलं यद्वद्दीननाम्ना बहिर्मृदुः ॥ अंतर्वचो भीम-
सेनस्यौदार्याग्निः समुत्थितम् ॥ २ ॥ अत्रोत्तरं मौनमेव मौनं तु द्विविधं स्मृतं ॥
गुरोः स्थानं मौनमेव मुनिभिर्मथितं मतैः ॥ ३ ॥ द्वितीयं मूर्खप्रश्ने च तथापि
वच्मि नामतः ॥ गुरवो बहुरूपेण बह्वर्थान् साधयंति हि ॥ ४ ॥ गुरूणां वस-
तिस्थानं कर्म वा केन ज्ञायते ॥ किमर्थं कस्य वा हेतोः कुत्र वा देशकालतः

म॰ ८ ॥१५॥

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

॥ ५ ॥ तत्र भागीरथीसेतू त्रिवेणी त्र्यंबकेश्वरी ॥ नदा नद्यः पुष्कराद्या यत्र श्रीगुरुपादुका ॥ ६ ॥ सार्धत्रिपीठानि ज्योतिर्लिंगाद्या विष्णुवैष्णवाः ॥ सर्व-क्षेत्राणि क्षेत्रज्ञा यत्र श्रीगुरुपादुका ॥ ७ ॥ यावत्पुण्याद्रिप्रवरा मेरुमांदारभूधराः ॥ चराचराः पापहरा यत्र श्रीगुरुपादुका ॥ ८ ॥ किमु तत्र यत्र यस्य निःश्रेणिस्त्र-यसाधनी ॥ भक्तिः स्यादनपायी च तत्रेदं सर्वमाहितम् ॥ ९ ॥ यतः कल्या-णतः पूर्वं सार्धयोजनमात्रके ॥ वने विवेशयामास वसतिं च विधानवित् ॥ १० ॥ यत्रासुरा वभू दोषाद् बिल्ववृक्षेण धिष्ठितौ ॥ तावप्यत्रापि प्रभुणा दग्धा-वह्निमुखात्पुनः ॥ ११ ॥ जनाः सर्वे तु बिल्वस्य कथं वृक्षौ विदग्धितौ ॥ पूजा-र्हाविति विज्ञप्ते त्रिविधैः प्राकृतैर्गुणैः ॥ १२ ॥ सापेक्षितानां तद्धस्तैः क्षेपयित्वा पुनर्जलं ॥ दलानि बहुधा जज्ञे दग्धकाष्ठस्य पश्यतः ॥ १३ ॥ प्रपेदिरे तदाश्चर्यं नाश्चर्यं सृष्टिसर्जने ॥ यस्य यस्य यथेच्छा वा तस्य तस्यैव भावतः ॥ १४ ॥ पूर्यंते वार्यंते चापि सहमूला विनश्यते ॥ तावपि प्रार्थितौ यस्मात्तद्ददामि विमोच-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

॥१६॥ नम् ॥१५॥ यथा तु मणिमल्लाभ्यां मार्तंडः प्रार्थितोवसत् ॥ विमलार्जुनमोक्षार्थ-
मुलूखलनिबंधनम् ॥ १६ ॥ प्रभोर्मार्गवशात् बिल्ववृक्षाभ्यामिह बंधनम् ॥ दीन-
उवाच ॥ तौ कौ कुतश्च वृक्षत्वं को हेतुर्वद पौर्विकं ॥ १७ ॥ वत्सल उवाच ॥
एको भस्मासुरः प्रोक्त आत्मघाताच्च वृक्षतां ॥ मुचकुंदाग्निना दग्धो द्वितीयः
कालयावनः ॥ १८ ॥ यतस्तु विष्णुना पूर्वं कुहकेन च घातितौ ॥ अतः प्रभुं
बलादेव निन्याते स्वांतिकं सुखं ॥ १९ ॥ बहुकालनिबद्धत्वात्स्वावस्थां निज-
गादतुः ॥ भस्मासुर उवाच ॥ अहं भस्मासुरः साक्षादपराधे कृतेश्वरे ॥ २० ॥
विनापराधाच्च कृतो बद्धवेषेण भस्मसात् ॥ पटुना बद्धना चापि चामीकरचमत्कृ-
ता ॥ २१ ॥ चंचरीकचलद्वाचा वंचितोऽहं न संशयः ॥ कृतागसा चेत्तेनापि नागः
किं न कृतः शिवे ॥ २२ ॥ पैशाचोऽनृतवाग्भ्रष्टो व्यसनी क्षणभंगुरः ॥ इत्याद्य- ॥१६॥
गुणभूतस्य वरो देहे परीक्षय ॥ २३ ॥ अनेन मम घातस्तु शिवस्यापि न हेल-
नम् ॥ द्विगुणं कर्म वै तस्य मुक्तिर्हि घातहेलनात् ॥ २४ ॥ यमोधः किं कर्म-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

णस्तु मम चैकस्य बंधनम् ॥ इत्थं त्राता क्वास्ति कुत्र शिक्षयित्वा यमं मम
॥ २५ ॥ मोचयित्वा पाशगणात्तूद्यतोद्यतनान्नहि ॥ त्वत्तोधुनैव सौख्यं
हि माया हि विरराम च ॥ २६ ॥ तूष्णींस्थिते तदा कालयवनोऽभिससार
तं ॥ कालयवन उवाच ॥ समीचीनं समीचीनं समीचीनं हि दर्शनम् ॥ २७॥
बद्धनिर्यत्नतत्तत्तृट्शांतये गांगजीवनं ॥ तस्मात्स्वभावसंजातं वैरं वक्ष्ये च पौ-
र्विकम् ॥ २८ ॥ कालयवनसंज्ञोऽहं कालांतक इवापरः ॥ कामये कृष्णघाताय
कालकर्मस्वभावतः ॥ २९ ॥ येन व्याजाद्भीरुणा तु घातितो न च पौरुषात् ॥
तथापि वासनादेहे बंधतो मां वृथा कृतः ॥३०॥ बालीशशिशुपालेन व्यर्थं नि-
र्भर्त्सनं कृतं ॥ तस्य ज्योतिः स्वीयमुखे बालीशः कोत्र दृश्यते ॥ ३१ ॥ अहं
स्वार्थपरत्वाच्चेदसौ स्वार्थपरो न किं ॥ कलत्रार्थे कुटिलतो हतो वा वानरार्थ-
कः ॥ ३२ ॥ नाम्नोपलानां तरणेमतादृग्दर्शनात्फलं ॥ विचारकस्तस्य कोऽस्ति
त्वहमेको निपातितः ॥ ३३ ॥ न वाङ्मात्रेण पौरुष्यं क्रियैवात्रोत्तरत्र वा ॥ आ-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

गते त्वयि तच्चिह्वात् क्रोधज्वालासमाकुलः ॥ त्वदंगमंगमंदस्पृगामोदमरुता हिमः
॥३४॥ अतो मायाहि मायाहि मायाहि महतां महान् ॥ शूरश्चेदत्रसंतिष्ठ नोचेत्कुरु-
पलायनम् ॥३५॥ क्षमस्व मम दौरात्म्यमिति चोपरराम ह ॥ इति वैरोधिकीं भ-
क्तिमाज्ञाय गुरुराट् तदा ॥ ३६ ॥ इत्थं गतिर्हि जीवानामतो विव्हलितो प्रभुः॥
नृदेहं सर्वदेहानां लब्ध्वा व्यर्थस्तु नेष्यति ॥ ३७ ॥ करमुक्तो वृथाबाणो तद्व-
न्नायाति सोपुनः ॥ इतःपरं किमाश्चर्यमद्यापि वासनेदृशी ॥ ३८ ॥ पाशबद्धो
देहहीनः कर्तुं किमपि न क्षमः॥ तयोः क्रोधः प्राणहानौ गुरोश्चित्तं द्रवान्मृदु॥३९॥
एतादृशगुरुत्यागी सुखभोगी कदा भवेत्॥ सदा सुखस्वरूपोपि परदुःखेन दुःखि-
तः ॥ ४० ॥ तयोराचष्ट सकलं वासनाग्रंथिभेदनम् ॥ भस्मीभूते सुरे कालकल-
नादेहवान्पुनः ॥ ४१ ॥ जडो देहो नाशमेति तद्भिन्नं चैव चेतनं ॥ देहाश्च-
त्वारः क्रमशः स्थूलाद्याः कारणांतकाः॥ ४२ ॥ आशंसितास्तथा तत्र विराटादि
तदंतिकाः॥ इत्थं ब्रह्मांडविस्तारो वर्णितो निगमागमैः ॥४३॥ श्रुतोनुदृष्टो वा-



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

त्रापि प्रतीतिः केन जायते ॥ त्वद्वाक्यवीर्यतः सर्वं मनसैव हि दृश्यते ॥४४॥
पुनर्मनश्च संपश्य तरलं च तरंगवत् ॥ तरंगाः केन स्फूर्णाऽन्यवातेन सोपि कुत्र-
तः॥४५॥ अयं वातश्चिदाकाशात्सावकाशादणुस्त्वयि ॥ यथावालकदल्याश्च मोच
यित्वा तु वेष्टनम् ॥४६॥ तदंतर्यद्वदेवात्र दृष्ट्वा तूष्णीं बभूवतुः॥ तूष्णीं कुतः को
विचारो विचारः केन भाषणं॥४७॥ वाताभावे तरंगाः क्व चेष्टाभावे क्व चेतनम् ॥
व्योमाभावे कथं शब्दः सोप्याकाशाद्धि जायते ॥ ४८ ॥ नभसोद्भवो ह्यहंका-
रात् तस्यापि महतोऽभवत्॥ प्रकृतेस्तु महत्तत्त्वं सापि ब्रह्मणि संस्थिता ॥४९॥
मणीव माणिकं स्तुत्वा भस्मकालमणीगुणात्॥मुक्तो निधाय तरणिं तरणीतरणाय
वै ॥ ५० ॥ नासुरौ मृत्युजन्मैव केवलं नापरं खलु ॥ तावेव मुक्तौ यत्र श्री-
स्तस्मात्कोन्वपरं स्थलम्॥५१॥ यद्वा तु भस्मकालाभ्यां नीलकंठोभिधीयते॥अ-
यमेव हि कैलासस्तस्मात्कोन्वपरं स्थलम् ॥ ५२ ॥ रजादिभस्म विरजा कालक-
र्म जलात्यये ॥ गुर्वंघ्रिनिश्चला बुद्धिः ब्रह्मणा सह याति च ॥ ५३ ॥ भस्मश-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

ब्देन शुद्धत्वं कं सुखं लामृतं मतम् ॥ शुद्धमोक्षसुखादेव वैकुंठमिदमेवहि ॥५४॥
तस्मान्माणीकनगरं सर्वक्षेत्राश्रितं वरं ॥ संगमेश्वरतीर्थं वै तथौदुंबरसंयुतं ॥५५॥
पुण्यारण्यं बिल्वक्षेत्रं सिद्धकल्पं सुभूधरम् ॥ कृताघखंडं भूदंडं गुरुभक्तप्रदेशकम्
॥ ५६ ॥ यत्क्षेत्रागमनेच्छयाखिलमहत्पापं विनष्टं भवत्पादन्यासविधानतो वि-
धिवशात्पुण्यं सुलभ्यं तथा ॥ श्रीमत्संगमतीर्थस्नानविधितो सर्वाधिकारा-
ग्रणीः सर्वार्थास्पदक्षेत्रदर्शनमिदं श्रीमाणिको यत्र वै ॥ ५७ ॥ इति श्रीमन-
नादिसिद्धचरितामृताधिसारे भवद्वधान्वतरे दीनवत्सलसंवादकरे माणि-
कप्रभाकरे अष्टममयूखः ॥ ८ ॥

श्रीदीन उवाच ॥ भवग्रैष्मनिदाघोष्मा शुष्कस्याभिमुखस्य मे ॥ तव वागा-
मृतागाधस्वादवृद्धितृषाबहु ॥ १ ॥ क्षम्यतां क्षम्यतां पापस्त्वद्विना कुत्र ग-
म्यते ॥ वत्सलत्वं कामधेनुर्वत्सं मां क्षुधयार्दितम् ॥ २ ॥ गुरुचारित्र्यदुग्धस्य
प्राशनादाशु जीवय ॥ मत्स्यस्यापि न दुग्धेन जीवितं जीवनं विना ॥३॥ तथा



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

तद्रसपीतस्य तेनैव क्षुन्निवारणम् ॥ तस्मात्तदेव मे स्तन्यं वारंवारं पुनःपुनः ॥ ४ ॥
इति वैक्लव्यविकलं कथयत्कलभाषणः ॥ वत्सल उवाच ॥ गुरुचारित्र्यमाहात्म्यं
दुर्ज्ञेयं दूरदर्शनम् ॥ ५ ॥ दुरापं तु दुराधर्षं तथा दुरवगाहकं ॥ तस्मादद्यतनं
केन केनापि च न वर्णितम् ॥ ६ ॥ सांबादंबापि कादंबानवलंबादलंबत ॥
यत्र शक्तेरशक्तिश्चेत्का शक्तिरपरस्य च ॥ ७ ॥ परात्परादकर्तृत्वादवस्तुत्वाद-
तींद्रियात् ॥ शक्तिपातप्रांतवासभासाभावादलिप्ततः ॥ ८ ॥ अतः कथं वर्णि-
तव्यं देवाद्या यदुपासकाः ॥ उपासकानां माहात्म्यं तदपि स्यान्न वर्णितुम्
॥ ९ ॥ यस्य सेवाप्रभावश्च सोपि चातीव दुर्धरः ॥ काम्यकर्मविहीना या सा
सेवा त्रिविधा मता ॥ १० ॥ कायिकी वाचिकी चापि मानसीति च भेदतः ॥
लुब्धको गृहकर्माणि सर्वाण्यपि सदैव तु ॥ ११ ॥ देहस्तु लोष्ठवत्कृत्वा तद्वत्सा
देहजा भवेत् ॥ वाल्मीकवन्नाममंत्रश्चावस्थासु चतसृषु ॥ १२ ॥ अन्यालापविही-
नार्था प्रोच्यते वाचिकात्मिका ॥ अनादिवासना यद्वन्मनःस्था मृत्युतोपि हि

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

॥१९॥ ॥ १३ ॥ तद्वच्चैव गुरोर्ध्यानं सैव मानसिकी वरा ॥ तदूर्ध्वसेवा चान्या हि सू-
क्ष्मात्सूक्ष्मतरा परा ॥ १४ ॥ सेवायाश्च कुतश्चांतो नानंतस्यापि भूयते ॥ त-
त्राप्याज्ञाधरो यस्य तुलयेत्तस्य कः फलं ॥ १५ ॥ तद्वदाज्ञोल्लंघकस्य प्रायश्चित्तं
न तस्य तु ॥ अत्र मे संशयोत्पत्तिर्गतिस्तस्य कथं त्विति ॥ १६ ॥ वत्सल
उवाच ॥ यथा नाम्नाहि तरणं मरणं करमोचनात् ॥ यस्माद्भ्रष्टः स एवेष्टः सर्व-
स्मात्कष्टमेव हि ॥ १७ ॥ अत्रैव स्पष्टं संजातमितिहासेन गीयते ॥ प्रभोः सह-
चराः केचिद्गुणात्परिचयाद्बहु ॥ १८ ॥ अपि वैराग्यसंवेषादाज्ञोल्लंघनदोषतः ॥
मुषित्वाद्गुरुपादाब्जं तेन नष्टायुषो मृताः ॥ १९ ॥ यमलोकं गतास्ते तु त-
दाश्चर्याद्यमोब्रवीत् ॥ अशेषदूतानपृच्छत्साधुवेषा इमे कुतः ॥ २० ॥ दूता
ऊचुः ॥ तथाविधा न पुरुषा इत्यूचुर्हर्षिता यमं ॥ प्रेषयित्वा चित्रगुप्तमन्वियेष
स लेखकः ॥ २१ ॥ अन्वेषयित्वा तद्दोषाननिर्धारितनिष्कृतिः ॥ अनाविष्कृत- ॥ १९ ॥
तद्दंडो षंढवत्पर्यचिंतयत् ॥ २२ ॥ दंडपाणिः पाशबद्धानाचचष्टे मनोभवम् ॥

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

यम उवाच ॥ यदा देशाधिपतिना चांबरीषेण पुण्यतः ॥ २३ ॥ कृते व्यापार-
रहिते प्रभुं शरणमागतः ॥ इदानीं प्रभुणैवात्र निर्व्यापारे कृते मयि ॥ २४ ॥
मयाधुना क्व गंतव्यं क्षंतव्यमिति कथ्यतां ॥ एको दंडधरश्चात्र प्रभुणा तु
जगत्त्रयम् ॥ २५ ॥ तस्मादिदं ममाश्चर्यं कथं चात्र समागताः ॥ मम चेच्च प-
रीक्षार्थं भवद्योग्यं न शिक्षणम् ॥ २६ ॥ नारकस्था न गृह्णंति गुर्वाज्ञाभंगका-
रिणाम् ॥ तथाप्ययं तु गुरुराट् तज्जनानां न शिक्षये ॥ २७ ॥ यद्भयाद्वाति
वातोयं सूर्यस्तपति यद्भयात् ॥ यद्भयादेव शिक्षेहं यद्भयात्सर्वमाहितम् ॥ २८ ॥
चित्रगुप्तादयः सर्वे प्रभीताः प्रविचार्य च ॥ इयमेव परायुक्तिर्नो शक्तिस्तत्र दंडने
॥ २९ ॥ तस्मात्तत्रैव नेतव्या मंतव्या महतां जनाः ॥ यमोपि प्रार्थयामास
यूयं वै भाग्यशालिनः ॥ ३० ॥ विना दंडान्मम करादागता तु तथा गताः ॥
एतदर्थं हि गमनं भुंजन्नाज्ञापितुं ध्रुवं ॥ ३१ ॥ नरकाणि च पश्यध्वं वसध्वं श्रीगुरुं
यतः ॥ द्वीपांतरस्था जीवापि नारक्यैः पूर्वजैः सह ॥ ३२ ॥ उद्धरंति हि भा-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

वेन निकटेपीदृशी गतिः॥ प्राक्कल्पानां च जीवानां येन चोद्धारणं कृतं॥ ३३॥
भवद्भिर्धैर्महाभागैर्मत्पुरी नूतनीकृता ॥ किं पुनर्बहुनोक्तेन नेदृग्योगः पुनः
पुनः ॥ ३४ ॥ पुनर्ममप्रार्थनीयं नेदृशो गुरुर्नेदृशः ॥ इत्याभाष्य स्वदूतैस्तान्य-
मोपि प्राहिणोत्प्रभुं ॥ ३५ ॥ आसीद्गुरुः संगमे तु जनानेकैर्वृतस्तदा ॥ तदा-
नीमेव ते दूताः सह तैश्चागतावशात् ॥ ३६ ॥ दूरान्नत्वा यमेनोक्तं कृत्वा तां
प्राहिणोदिति ॥ तत्स्वाधीनं ततः कृत्वा शंसंतस्तद्यशो ययुः ॥ ३७ ॥ पप्रच्छ
तान्प्रभुर्याम्यं कुतस्तत्र बभूव किं ॥ अवाङ्मुखाः कर्मणा च पाशबद्धाः सल-
ज्जिताः ॥ ३८ ॥ दूराद्गुरुं प्रणम्याग्रे भिया गद्गदभाषणाः ॥ प्रभो पाहि प्रभो
पाहि पाहि नः शरणागतान् ॥३९॥ क्षमस्व नश्च दौरात्म्यमपराधशताधिकं ॥
यत्र क्वापि गतिर्नास्ति त्वं विना तु दयानिधे ॥ ४० ॥ यद्यद्यमेन संक्षिप्य व-
र्णितं प्रभवे जनान् ॥ तथैव स्वामवस्थां च तत्सर्वं विनिवेदितम् ॥ ४१ ॥ उप-
धार्य प्रभुः सर्वानाज्ञोल्लंघनमीदृशं ॥ प्रकंपिरे तदा सर्वे भयत्रस्ता हि चिक्रमुः



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

॥ ४२ ॥ नाथ नाथ जगन्नाथ दीननाथ कृतार्थतां ॥ किं स्याच्चास्मत्प्रार्थनया
कुरु त्वं पुरुषार्थतः ॥ ४३ ॥ प्रभुः प्रहस्य तत्रापि यमाद्यालोकयंत्यमून् ॥ सं-
गमे स्नापयित्वा तान्पाशमुक्तान् चकार सः ॥ ४४ ॥ सर्वे देवाः समालोक्य
बह्वाश्चर्यं प्रपेदिरे ॥ येषां चोर्वपराधानां कापि शिक्षा न तत्समा ॥ ४५ ॥ य-
मोपि यत्र संत्रस्तस्तत्र मुक्तौ न चोक्तयः॥ तथापि शक्तयस्तस्य गुरोरेव विमुक्तयः
॥ ४६ ॥ तस्माद्दीन त्वया ज्ञेयं गुरुरेव सदागतिः ॥ तद्विना नैव नैवेति सत्यं
सत्यं न संशयः ॥ ४७ ॥ संगमाख्यं तीर्थराजं सर्वतीर्थाभिधायकम् ॥ यत्र
सर्वाघविध्वंसो यत्र पाशविमोचनम् ॥ ४८ ॥ तत्र सर्वाणि तीर्थानि स्वस्वाघ-
परिमोचने ॥ पितरः परिमोदंते यस्योदकप्रदानतः ॥ ४९ ॥ तस्मात्तत्तीर्थम-
हिमां केन शक्योभिवर्णितुं ॥ यस्य माहात्म्यश्रवणात्सर्वकामानविंदते ॥
॥ ५० ॥ श्रीमत्संगमतीर्थराजममलं तापत्रयोन्मूलनं पानस्नाननिषेवणेन दुरितं
दूरीकृतं येन वै ॥ यत्तीरे गुरुराजधाम जयते जानंति तद्धामिनस्तस्मात्सर्व-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

मुमुक्षुभिश्च सततं संसेवनीयं मुदा ॥ ५१ ॥ इति श्रीमननादिसिद्धचरितामृताब्धिसारे भवदवधान्वंतरे दीनवत्सलसंवादकरे माणिकप्रभाकरे नवममयूखः ॥ ९ ॥

श्रीमाणिकाय नमः ॥ दीन उवाच ॥ तापत्रयेण तप्तोहं तव वाग्घनवर्षणात् ॥ ग्रीष्मातपेन क्ष्मेवैव शमते किं न तत्क्षणात् ॥ १ ॥ याचामि वत्सल त्वां वै कथागाधह्रदं मुहुः ॥ पथिकश्चोष्मितो यद्वत्पायंपायमिवोदकम् ॥ २ ॥ पूर्णे महीतले यद्वदंबुना नोपयोगि कं ॥ त्वन्मुखादेव तृप्तस्य चातकस्य घनोदकम् ॥ ३ ॥ त्वदाधारेण तिष्ठामि त्वद्विना नहि जीवनं ॥ यथा वासनया जीवो विना जीवस्य जीवनम् ॥ ४ ॥ तावत्स्फुरामि चोर्मीभिः शब्दवातोवकाशतः ॥ निर्द्दष्टरि निर्विवाते निस्तरंगमिवोदकम् ॥ ५ ॥ तस्माद्यावत्स्वदेहस्तु तावत्तत्कथनं कुरु ॥ उक्तं तत्संगमं तीर्थं सेवाद्या देवकाः कथम् ॥ ६ ॥ वत्सल उवाच ॥ कदाचित्स्वर्गलोके तु शतक्रतुबुभुक्षितः ॥ आश्चर्यमेव तत्राभूत्कलावस्मिन्कथं



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

त्विदम् ॥ ७ ॥ भूलोकादागता जीवा गंतुं भूमौ समुद्यताः ॥ नो स्वारस्यं
स्वर्गलोके यत्सुखं प्रभुसन्निधौ ॥ ८ ॥ गंधर्वाश्चाप्सराः सिद्धाः शंसंतस्तेपि
चान्वयुः ॥ इंद्रैकोर्वेरितस्तत्र सोप्यागाद्यत्र वै प्रभुः ॥ ९ ॥ भूमौ यत्रातिनि-
बिडा वर्षंति जलशर्कराः ॥ तद्वत्सभालोकरुद्धा नो मार्गो वीक्षितुं मुखं ॥ १० ॥
बिडौजास्तु बिडालस्य रूपं धृत्वा प्रभोंतिकम् ॥ गत्वा स्वभावशब्देन याम्यहं
याम्यहं त्विति ॥ ११ ॥ शिरःशिरःशिरश्चेति प्रभुणापि निराकृतः ॥ मामव
मामवोवाच एहि एहीति निर्गतः ॥ १२ ॥ दीन उवाच ॥ किमर्थमागतः
शक्रः किमुक्त्वा निर्गतः कथम् ॥ किमुत्तरं कश्च प्रश्नो बिडालोपि कुतो
वद ॥ १३ ॥ वत्सल उवाच ॥ अनाहूतो हि मार्जारः प्रश्नादिस्तस्य एव हि ॥
बुभुक्षितो भोजनार्थं प्रश्नोयं चागतोस्मि च ॥ १४ ॥ तत्रोत्तरं शिरश्चेति
वेदोपनिषदं शिरः ॥ क्रतुभुक्त्वं यतश्चात्र सत्रं प्राणाग्निहोत्रकम् ॥ १५ ॥
तत्किं क्षुधोपशमकं मामवेति क्रतुं कुरु ॥ पुनः प्रश्नाद्दयालुस्तु एहि त्वं कुरु

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

साधनं ॥ १६ ॥ इति वाक्यात्प्रमुदितः कलौ चातीव दुर्लभं ॥ सर्वदेवगणैः
॥२२॥ सार्धमायास्येति गतो वृषः ॥ १७ ॥ देवेंद्रे तु गते स्वर्गं भूदेवापि तथैव हि ॥
संमीलिताः साधितार्था यथा सृष्टिः प्रभोर्विना ॥ १८ ॥ भूत्वा तत्वानि त-
त्वेभ्यः काले काले न मेलनम् ॥ तत्रैव विलयं यद्वत्संगताः सर्वतस्तदा ॥१९॥
स्वस्वभावेन स्वस्वार्थमर्थयामासुरार्तवत् ॥ वयं त्वामंत्रणोत्साहास्तस्मात्क्रतुर्वि-
धीयतां ॥ २० ॥ प्रहस्य प्रभुराद् प्रार्थ्यान् प्राह प्रणतवत्सलः ॥ प्राज्ञैः प्रार्थ्यं
हि प्राचीनं प्राक्कर्म परिमोचनं ॥ २१ ॥ स पिता मृत्युतः पाति सा माता मृ-
त्युमोचिका ॥ स गुरुर्गतिदाता च स क्रतुः कर्ममोचकः ॥ २२ ॥ वेदमंत्रैः
क्रीयमाणा क्रिया युष्मासु संस्थिताः ॥ यूयमेव हि कर्तारो ब्रह्मामंत्रणस्वोत्सवाः
॥ २३ ॥ सैवाज्ञेति च मन्वानाः सर्वेपि कार्यसाधकाः ॥ स्वस्वकार्याण्युदवहन् ॥२२॥
द्विजाश्चैवाध्वरादिकम् ॥ २४ ॥ यस्याज्ञां च कृपां दृष्टिं सृष्टिकर्ताप्यपेक्षते ॥
अतस्तु भूतधात्र्यैव स्थानशुद्धिं व्यधात्तदा ॥ २५ ॥ विश्वकर्मा मंडपानि वरु-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

णस्तोयसाधने ॥ वायुः सुगंधद्रव्ये तु विताने व्योम यस्य वै ॥ २६ ॥ अग्निः सर्वाध्यक्षको हि पाचनाद्यवदानतः ॥ समित्कुशद्विजाद्यैश्च सालंकृत् क्रतुमंडपे ॥ २७ ॥ इत्थं संभृतसंभारे यजमानोत्र को भवेत् ॥ तदा यज्ञेश्वरः साक्षाद्यजमानोऽभवत्स्वयम् ॥ २८ ॥ नारायणः कारयिता रक्षणे तु दिगंबरः ॥ ऋत्विगाद्याश्च सुस्नाताः सोपस्काराः सुपूजिताः ॥ २९ ॥ याजका यजने दक्षाः शिक्षयंतो विधानतः ॥ अग्निं संस्थाप्य देवेभ्यः प्रेषयंति पृथक्पृथक् ॥ ३० ॥ तदा देवगणाः सर्वे तद्दर्शनमहोत्सवाः ॥ आजग्मुर्मूर्तिमंतस्ते नानावेषेण चादरात् ॥ ३१ ॥ सुरेंद्रोपि यथापूर्वं प्रार्थितं तत्तथाकरोत् ॥ तस्मात्तत्र क्रतौ न्यूनं किं भवेद्देव साद्यतः ॥३३॥ अमितांश्च जनान्दृष्ट्वा चान्नपूर्णा द्विधाभवत् ॥ एका साहित्यनिलये चैका पाकविधानके ॥ ३४ ॥ देवानाहूय देवेंद्रस्तस्या हस्ताग्रतो ददौ ॥ संभारानयने सर्वे तत्र तत्रैव ते स्थिताः ॥३५॥ दृष्ट्वा कार्यांतरे त्वेकामिंद्रोभूत्पाकशासनः ॥ बहुकार्याणि दृष्ट्वैव नारसिंहस्तु संदधे ॥ ३६ ॥ तत्रापि पाके

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

नो शाला तस्मात्ता एव भूरिशः॥शाखानां प्रतिशाला च तथापूपगणे पृथक्॥३७॥
व्यंजनानां पृथक् शालाऽपूपपायसशोभिताः॥ भक्षशाला चान्नशाला तत्रानेकाहि
भेदतः॥३८॥ दध्यन्नं च सुचित्रान्नं मध्वन्नं मुद्गमिश्रितम् ॥ शुद्धान्नं केसरा-
न्नादि मुख्यानि गदितानि च ॥३९॥ तत्राप्येकैकभेदेन साकल्यात्केन वर्ण्यते ॥
शिशोर्दुग्धं समारभ्य भोजनोपहारादिकैः ॥ ३९ ॥ आसमुद्रादागतानामाबा-
लवृद्धरोगिणां ॥ आचंडालविजातीनामन्नाद्यैः समतोषयत् ॥ ४० ॥ सूर्योदयं
समारभ्य पुनः सूर्योदयावधि ॥ अलातचक्रवत्सर्वे सर्वमादाय सर्वदा ॥४१॥
पाकिनः सर्वदा पाकं परिवेष्यंति वै पुनः ॥ पुनः पुनश्चकर्तारो नोदयास्तं हि
मेनिरे ॥ ४२ ॥ केचिदुद्भिज्जतृप्तारः केचिज्जारजमेव च ॥ केचित्स्वेदजजातीनामं-
डजानां तथैव च ॥ ४३ ॥ यस्य यस्य यद्यदन्नमुपजीव्यं हि यस्य यत्॥ तत्तत्ते
ते तु संप्राप्य ब्रह्मांडमप्यतृप्यत ॥ ४४ ॥ तथा यज्ञेश्वरोप्यग्निं घृतधाराभिराप्लु- ॥२३॥
तम् ॥ यावद्देवगणैः सार्धं यथेष्टं तृप्तिमातनोत् ॥ ४५ ॥ यथा संततधाराभि-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

रत्र तृप्तो हुताशनः ॥ न तथात्र परत्रापि स्वतंत्रमशनाद्यतः ॥ ४६ ॥ द्विजाना-
माज्यतृप्तिर्हि किमु वक्तव्यमत्र वै ॥ तथा पात्रप्रवाहेण भूतधात्र्यपि तर्पिता
॥ ४७ ॥ इत्थं विश्वमुखस्तृप्तो मखे शतमुखः किमु ॥ द्विजमुख्याश्च संतृप्ताः
प्रयुज्याशिषमुत्तमाम् ॥ ४८ ॥ प्रभोरग्रे भोजनस्य प्रावोचन् रुचिमादरात् ॥
यथा तु साधकाः सिद्धं स्वानुभावं वदंत्यमी ॥ ४९ ॥ प्रभो चैकैकशाखानां
रुचिः क्षुद्विनिवार्धनी ॥ यथा केक्यासने जंतोर्जाठराग्निः प्रवर्धिते ॥ ५० ॥
इंद्रमाहूय च मया धिक्कृतं सर्वसन्निधौ ॥ तव लोकेमृतंत्वेतदत्र पंचामृतं भज
॥ ५१ ॥ यदा भोजनयुद्धे तु तव पङ्ग्वामृतं भवेत् ॥ एकत्वादग्निमांद्यत्वात्क
शक्तिर्युद्धसाधने ॥ ५२ ॥ पंचत्वादग्निसाह्यत्वादनेकत्वाद्विशक्तितः ॥ तस्मा-
द्भज त्वं शक्तिश्चेन्नो चेद्व्रज यथागतम् ॥ ५३ ॥ एकस्मादधिकैका सा रुचिः
केनानुवर्ण्यते ॥ तस्मात्त्वं तु चिरंजीव नस्तृप्तिं सर्वदा वह ॥ ५४ ॥ श्रुत्वा
ब्रह्मण्यदेवोपि मंदस्मितमुखांबुजः ॥ द्विजाग्निमुखमेवास्य सर्वदा द्विजतर्पणम्

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

॥ ५५ ॥ तथास्त्विति मुदा सर्वे समाप्येष्टिं नदीं प्रति ॥ गत्वावभृथस्ना-
नानि कृत्वानंदान्निवर्तिताः ॥ ५६ ॥ नरसिंहेन चाज्ञप्तः कुबेरो गुप्तरूपतः ॥
आनिन्ये स्वांशद्रव्याणि शकटेषु विनिक्षिपन् ॥ ५७ ॥ तदा सौवर्णवस्त्रादि
रौप्यमुद्रामितागताः ॥ ताः सर्वा ऋत्विगादिभ्यो याचकेभ्यश्च दत्तवान्
॥ ५८ ॥ तदा सर्वे प्रमुदिता गायंतस्तद्यशांसि च ॥ कीर्तिदूता एव दिक्षु त-
न्मनस्कास्तथागताः ॥ ५९ ॥ तत्रावशिष्टांश्च ऋषीन् दृष्ट्वा भीत्या प्रभोंतिके ॥
कुबेरोपि विरक्तः सन् लज्जया च विनिर्गतः ॥६०॥ कुबेरगतिमाज्ञाय मणिधेनुसुर-
द्रुमान् ॥ प्रतर्प्य मूकतस्त्विंद्रो दृष्ट्वैवोत्कंठितस्तु तौ ॥६१॥ इंद्र उवाच ॥ जगति जन्म
ते भाति मन्मते सकलप्राणिनां स्वात्मभूतये ॥ कलिमलोद्धुतध्वांततेजसे कुरु
कृपां विभो माणिकप्रभो ॥ ६२ ॥ परमपूरुषः प्रागनुद्धुतः परवरार्थितः प्राण-
धारकः ॥ गुणत्रयात्ययादत्रिनंदनः कुरु कृपां विभो माणिकप्रभो ॥ ६३ ॥ अ- ॥२४॥
खिलदेवताकामपूरणान्निखिलजीवराश्यादि पोषणात् ॥ सततदानतो दत्त-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

नामकः कुरु कृपां विभो माणिकप्रभो ॥ ६४ ॥ कलियुगे स्वयं कामितार्थदः
वृतकरार्षणात्कामिनीवरात् ॥ श्रितश्रयाच्च श्रीपादसंज्ञकः कुरु कृपां विभो मा-
णिकप्रभो ॥ ६५ ॥ कुपुत्रकुत्सितादात्मघाततो द्विजवधूवरात्स्वेच्छितार्थतः ॥
नृसिंहनामतो हंसबोधकः कुरु कृपां विभो माणिकप्रभो ॥ ६६ ॥ भवनदी-
वहान्स्वात्मबोधतः परदयावशादुद्धरेच्छया ॥ मनोहरात्रितो माणिकाभिधः कुरु
कृपां विभो माणिकप्रभो ॥ ६७ ॥ पतिव्रतादिभं गांगसंगिनं मदनमर्दितं का-
यछिद्रितम् ॥ कतिकति ब्रुवे तेऽपराधिनं कुरु कृपां विभो माणिकप्रभो ॥ ६८ ॥
त्वदनुषंगतः स्वर्गकाननं पदमपि विपद्वारवत्तनुः ॥ विभवबंधनं भासते मम कुरु
कृपां विभो माणिकप्रभो ॥ ६९ ॥ इत्यभिष्टूय पुरतः सर्वे गंतुं समुद्यताः ॥ वा-
स्तवं संस्तवं श्रुत्वा प्राह प्रहसिताननः ॥ ७० ॥ वैराग्यं यत्र तत्रैव स्वाराज्ये छ-
त्रधारणम् ॥ गुरोरादेशतः कर्म पद्मपत्रमिवांभसा ॥ ७१ ॥ इति गुरुवरमिष्टं त्वष्टकैः
मा. प्र. ५ स्तोत्रयित्वा परमवरमभीष्टं चाष्टदिक्पालकोपि ॥ प्रभुवर मम वाणी सत्यमेवं वि-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

धत्स्व पठति य इदमाद्यं सर्वसाध्यं कुरुष्व ॥ ७२ ॥ इति संप्रार्थ्य ते देवाश्चा-
ज्ञां संगृह्य सर्वतः ॥ दिशो वितिमिराश्चक्रुर्यज्ञगाथाप्रशंसिनः ॥ ७३ ॥ अशेषे
निर्गते यज्ञात् शेषोप्युत्कंठितस्तदा ॥ निःशेषं तोषितुं चैष्यद्वीक्ष्य चैवमभाष-
यत् ॥७४॥ शेष उवाच ॥ श्रीमन्नद्यैव दृष्टं प्रभुवरगुरु ते रूपमाद्यं सुवेद्यं प्रोद्य-
न्माद्यन्मतंगागतकुलिशधराद्यादिदेवैकवंद्यम् ॥ योगी योगावलंबप्रबलतरहटोद्घा-
टनस्पष्टपीठप्रोद्यद्विद्युत्स्थितश्रीः शमितगुणगणागण्यस्वानंदभूतम् ॥७५॥ भूत्वा
भूवह्निभूतार्थितमणिचुलके पर्वतश्रेष्ठपीठेऽभीष्टे सर्वस्य तुष्टे लिखितमपि पुरा
विश्वस्रष्टा हि कष्टम् ॥ नोभूयात्तत्तदर्थं द्विजविरजमनोहारनामात्रितोजो जाज्व-
ल्याज्जातवेदाज्जगति विजयते माणिकाख्योवतारः ॥७६॥ मत्स्यः कच्छो वराहो
नृहरिरिति तथा वामनो जामदग्न्यो रामः कृष्णश्च बौद्धो दशविधशतशो भा-
विभूतस्य कल्किः ॥ एतेष्वेकैकहेतुर्विततगिरिधरः शंखप्राणापहारी सौवर्णाक्ष-
स्य हंता विदलितकशिपुः स्थापितोधो बलिष्ठः ॥७७॥ रामोपि क्षत्रहंता दश-



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

रथतनयो राक्षसानां निहंता हंता कंसस्य कृष्णो विबुधबुधजनान्मोहनार्थं हि बौद्धः ॥ म्लेच्छानां च प्रहर्ता कलितकलियुगे कल्किनाम्ना तु चात्र हेत्वेकाभावकार्याज्जगति विजयते माणिकाख्योऽवतारः ॥ ७८ ॥ येनेदं सर्वपूर्णं विदधति यतः सर्वकर्तापि सर्वं सर्वांतर्योगरूपी सकलमतिमतस्थापकः सर्वदश्च ॥ कारुण्यानां निधित्वात् कलिमलमथनात्कारणाभावभावात्के वै यांत्यत्र साम्यं जगति विजयते माणिकाख्योवतारः॥७९॥ पूर्वं दूराश्रिताया जगदिदमुदितं दूरतो जानतोस्य तस्याप्याधारभूतात्कमपि करणतो भासते यद्वदत्र ॥ तत्राप्येतावतो ये जलधिनिपतिता जीजये वा विकल्पे ब्रह्मांशात्संज्ञयैषां प्रकृतिगुणभृतो भूतसंघेषु जीवाः ॥ ८० ॥ तत्कालादद्यतस्ते प्रकृतिगुणवशान्नो धृताः केनचिद्वे यद्वत्सूर्याब्जमध्ये निपतितभ्रमराः सूर्यतस्ते विमुक्ताः ॥ तद्वत्सर्वेपि जीवास्त्वदगमनप्रभाजालजाज्वल्यमानस्फूर्जद्दिव्याग्निज्वालाज्वलितपटलकृज्ज्वालमुक्तास्तरंति ॥ ८१ ॥ ये ये वै कर्मबंधादतितरमतिमत्पातकं ब्रह्मजं वा

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

स्वर्णस्तेयं सुरापं वृषलिगमनतोद्भूतनानाविकारात्॥अंधाः कुब्जाश्च काणा बधिर-
बहुगदाः पंगुकुष्ठादिन्यंगास्तेभ्यः संतारणात्त्वं जगति जय जयेत्यत्र नः शं वि-
धत्स्व ॥ ८२ ॥ बालग्राहादिग्रस्ताः प्रबलतरमहामारणादिप्रयोगा वंध्याविद्यादि-
शून्यास्तिमितजडधियो भ्रष्टदेहाश्च भ्रांताः ॥ कासश्वासाभिभूता व्यथितजठ-
रशूलादिमूलाधयाद्यास्तेभ्यः संतारणात्त्वं जगति जयजयेत्यत्र नः शं विधत्स्व
॥ ८३ ॥ संबंधाबद्धभावाद्दणहतिद्विषतो जन्मजन्मांतरस्थास्तेषां संपीडनेन स-
ततमनुदिनं क्लिश्यतां देहभाजां ॥ जीवानां दोषपूर्णात्प्रमुषितमनसां मृत्यु-
जन्माधयश्च तेभ्यः संतारणात्त्वं जयति जयजयेत्यत्र नः शं विधत्स्व ॥ ८४ ॥
ये ये गर्भस्थिता हि प्रकृतिगुणगणैर्बंधनैर्वेष्टनैश्च नानापापोपतापैरनवसरतरैः
श्वासरोधादिकैश्च ॥ जीवाः संवृद्धचित्ता व्यथितहृदयतः प्रार्थयंते हि त्वां वै
तेभ्यः संतारणात्त्वं जगति जयजयेत्यत्र नः शं विधत्स्व ॥ ८५ ॥ तत्रैकाग्रस्य ॥ २६ ॥
योगाज्जनितशतसहस्रादिजन्मोद्भवानि पश्यंतः पातकानि पुनरिह पतनं नोभवेद्य-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

त्तथा न ॥ इत्थं संमंत्रितापि प्रकृतिगुणवशान्मोचितुं नैव शक्तास्तेभ्यः संतारणात्त्वं जगति जयजयेत्यत्र नः शं विधत्स्व ॥ ८६ ॥ बाल्ये क्रीडाभिरत्या तरुणतरुणितो वार्धके चिंतया तु बाह्येत्यादिस्वभावादपि परवशतो मोचितुं नैव शक्ताः ॥ अंतर्बाह्येपि बद्धास्तत इत भ्रमतो मोचकास्तेपि बद्धास्तेभ्यः संतारणात्त्वं जगति जयजयेत्यत्र नः शं विधत्स्व ॥८७॥ आगर्भान्मृत्युतोतः पुनरपि जननं त्वत्र मृत्युः पुनश्च यन्मायाचक्रतश्चाकलितमिलनतोभूच्च ब्रह्मांडमेतत् ॥ यच्चक्रं तच्चनक्रनखविदलनतः स्थूलसूक्ष्माद्धिचक्रं तेभ्यः संतारणात्त्वं जगति जयजयेत्यत्र नः शं विधत्स्व ॥ ८८ ॥ ब्रह्माण्डेहं च ब्रह्म तदपि च वपुषि जीवनाम्ना विभाति कार्याध्यक्षो हि ब्रह्मा इत उत मति वै तत्र विष्णुर्हि रक्ष्यः ॥ अत्रांतःकरणमेव स्वजनसुतसुहृत्पालने संप्रवृत्तास्तेभ्यः संतारणात्त्वं जगति जयजयेत्यत्र नः शं विधत्स्व ॥८९॥ तत्र स्थूलादि पंचात्र तु लघुमिलनात्पंचभूताख्यदेहस्त्वेवं ब्रह्मांडपिंडप्रकटितभ्रमणं चक्रतश्चक्रधारी ॥ सैषो मीनादिरूपे-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

भ्रमति भ्रमयति किंपुनर्जीवसंघास्तेभ्यः संतारणात्त्वं जगति जयजयेत्यत्र नः शं विधत्स्व ॥ १० ॥ इत्थं तं चक्रवेगं परिहरति कथं शक्यते कः कुतो वा ये ये प्राप्ता विधातुं विधिसुधियबुधाराध्यकालादयश्च ॥ ते सर्वेप्यस्य वेगात्क्वच स्थितिगति वै नाममात्रं न चैषां तेभ्यः संतारणात्त्वं जगति जयजयेत्यत्र नः शं विधत्स्व ॥ ११ ॥ तच्चक्रं यस्य दृष्टेर्निमिषपतनसंजातवातप्रहर्षसंवर्षामोघ-धारावरभरितनिधिस्पर्धिवीचिप्रसंगात् ॥ मग्नं वा धिक्कृतं वा द्रुतगति किमिति नैव नामैव तस्य तस्मात्संतारणात्त्वं जगति जयजयेत्यत्र नः शं विधत्स्व ॥१२॥ तस्मात्संप्रार्थयेहं सकलजनजनान् सत्वरेणारणेन श्रीमत्पादाब्जभक्त्या कृतस्त-वस्तवनात्तत्कृपापादनीया ॥ नो चेच्चक्राख्यनक्रनखमुखप्रखरैश्छेदनैर्नित्यदुःखं स्यादेवेच्छा यथा स्यात्कुरुत न च पुनर्माणिकाख्योऽवतारः ॥ १३ ॥ भूयात्ते भो विभूमन्नतिशयशयनारोग्यमैश्वर्यमायुः कल्याणं चैव शश्वद्युगपदनुदिनं दर्शनं सर्वजंतोः ॥ संसारेस्मिन्दरिद्राशनवसनभवोद्भूततापा नितांतं तेभ्यः संतारणात्त्वं



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

जगति जयजयेत्यत्र नः शं विधत्स्व ॥९४॥ यस्मिन् शेषः सुरेंद्रोप्यथ नयनव्रजै-
र्वीक्षितुं नैव शक्यो बाणः साहस्रबाहुर्गलितकरतलः सर्वगर्वापनोदः॥ शेषे क्वा-
शेषवाणीसहस्रपरिमिता वाग्झरीमंजरीति तत्र श्रीपादकंजे भुजविजयकृते
स्वार्पितामूकतैव ॥ ९५ ॥ अशेषाचार्यशेषस्तु स्तुत्वाशेषार्यमाणिकं ॥ अशेषा-
घहरात्स्तोत्रान्निःशेषं स्थानमाययौ ॥९६॥ विनिर्गते फणिवरे प्रल्हादाद्यसुरोत्त-
माः ॥ तथा बिभीषणमुखा जांबवत्प्रमुखा नताः ॥ ९७ ॥ एकैकशश्च ते भक्ता-
स्ताडयन्त्यल्पकालतः॥ युगपदेव सर्वेपि संमंत्र्य शंसयाम भो॥९८॥ सर्वे ऊचुः॥
स्वयं प्राणदेवाच्छ्रुतायज्ञशंसाः स्वयं चागताः सर्वतो स्वस्वस्थानात्॥ अयं किं
कलिर्वा त्वियं किं जनिर्वा ततः किं ततः किं ततः किं ततः किं॥९९॥ अनुद्भूतरूपा-
दनिर्वाच्यस्थानादनश्रूतजन्माकथं वावतारः॥ अयं किं कलिर्वा त्वियं किं जनिर्वा
ततः किं० ॥ १०० ॥ कदाप्यश्रुतो वा तथा नैव दृष्टो वरिष्ठो हि दिष्टात्कथं दृष्टि-
मध्ये ॥ अयं किं कलिर्वा त्वियं किं जनिर्वा ततः किं ततः किं ततः किं ततः

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

किं० ॥१०१॥ ममायं नृसिंहो ममायं हि रामो ममायं तु धामा ममायं विरामः ॥ अयं किं कलिर्वा त्वियं किं जनिर्वा ततः किं ततः किं ततः किं ततः किं ॥२॥ आखूनां हेरंबश्चंडीनां हि सांबो महीषादिकांबाशिशूनामथांबा ॥ अयं किं कलिर्वा त्वियं किं जनिर्वा ततः किं ततः किं ततः किं ततः किं ॥ ३ ॥ ममायं हि योगो ममायं प्रभोगो ममायं तु भागो वियोगाद्भवस्य ॥ अयं किं कलिर्वा त्वियं किं जनिर्वा ततः किं ततः किं ततः किं ततः किं ॥ ४ ॥ ममायं विचारो ममायं त्वचारो ममायं तु चोरोऽखिलस्यापहारात् ॥ अयं किं कलिर्वा त्वियं किं जनिर्वा ततः किं ततः किं ततः किं ततः किं ॥ ५ ॥ ममायं तु हारो ममायं विहारो ममायं तु जारो मनोवश्यकत्वात् ॥ अयं किं कलिर्वा त्वियं किं जनिर्वा ततः किं ततः किं ततः किं ततः किं ॥ ६ ॥ मम त्यागतो नैव गच्छत्यसौ वै तथा गृह्णतो नैव चायास्यतीह ॥ न ग्राह्यं न त्याज्यं न चैवात्र बुद्धिस्ततः किं ततः किं ततः किं ततः किं ॥ ७ ॥ तदा सर्वाश्चर्याद्गुरुत्तु-



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

तिविधानं विदधतस्त्वटंतस्ते स्थानं प्रभुविरहदुःखादहह वै ॥ अयं तांस्तान्वेषा-
न्स्वगतिविहितान्दर्शितमपि दशाधिक्यादित्थं नहिनहिमितो नेति विदुषां ॥८॥
ततस्ते ऋषिसिद्धाहि मणिचूलांतरे स्थिताः ॥ माणीकतीर्थसत्तीरे पुनर्वक्तुंप्रच-
क्रमुः ॥ ९ ॥ पूर्वं वैदुरिकक्षेत्रात्प्रेमपूरं समागतः ॥ अनेकजनसंकीर्णः सर्वलो-
कस्य पश्यतः॥१०॥ गुप्तो भूत्वा चास्मदर्थं त्वया चास्मान्सुबोधितः॥ बहुकालतृ-
षार्तान्तु सूक्ष्मसंशयप्रज्वलात् ॥ ११ ॥ पूर्वं नृसिंहयतिराडायास्येतत्तथागतः ॥
इदानीमपि त्वं लोकानन्वेष्यंतीति विद्रुतः ॥ १२ ॥ अतोऽतृप्तस्वनेत्रांगास्तृप्त्य-
र्थं सत्रमागताः॥ तृप्ता वयं लोकभाग्यं त्वत्संगात्कोनु वर्णयेत् ॥ १३ ॥ ऋषि-
सिद्धा ऊचुः॥ अहो सर्वलोका वयं प्रार्थयामो न नेदृक्च भाग्यं क्व युष्मत्समं हि॥
हितार्थं पितावत्सदा पुत्रभूतमतस्तं भजध्वं प्रभुं माणिकाख्यं॥१४॥ अहो दत्त-
रूपमहो श्रीपदाख्यं तथा नारसिंहं सरस्वत्यनंदं ॥ स्वनंदात्सुनंदादिनंदप्रबंधम-
तस्तं भजध्वं प्रभुं माणिकाख्यं॥१५॥त्रिकालेप्यनुद्भूतरूपं त्विदं हि यतो बालली-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

 

॥२९॥ लाविलासान्वितत्वात् ॥ पुनर्नो विलापात्प्रलापैव सर्वंमतस्तं० ॥ १६ ॥ चिदं
चिद्विलासं चिदाकाशचैत्यं चिदाभासचित्तांश्चिदानंदयंतं ॥ चिरं चिंतितानां क्व
चिंताचिराद्यमतस्तं० ॥ १७ ॥ नतानां च हारं च्युतानां प्रहारं धूतानां विहारं
वितानामहारं॥धूर्तानां निहारं सृतां कर्महारमतस्तं०॥१८॥भवानां हि पारं श्रुती-
नामपारं परायाश्च पारं निजानां कूपारं॥मताद्याकुपारं तृषार्ते प्रपारमतस्तं०॥१९॥
मुनीनां प्रभावं सतांध्येयभावं जंतूनां स्वभावंस्वरूपाविर्भावं॥खलानामभावं भवी-
नांकुभावमतस्तं०॥२०॥सृतां कर्णधारं श्रुतेः कर्णधारं स्मृतेः कर्णधारंक्रतोः कर्णधारं
बृहत्कर्णधारं बृहत्कर्णधारमतस्तं० ॥२१॥ निजाश्रितानां स तु गव्यरूपः श्रोतुर्मनो
ज्ञाचकथास्वरूपः ॥ स्मर्तुर्मनोज्ञाच्च हि ध्यानरूपः क्रतोरपि स्यात्स तु ब्रह्मरूपः
॥२२॥ तत्तच्छ्रुतत्वादतिस्थूलकर्णः स्थूलाच्च स्थूलादादराद्विरक्तिः ॥ केनापि
तच्चिंतनतत्कथाद्यैस्त्वतोभजध्वं गुरुं माणिकाख्यं ॥ २३ ॥ इति स्तुत्वा प्रभुं ते ॥२९॥
तु ऋषिसिद्धाश्च निर्गताः ॥ क्रतोः कथां प्रशंसंतः प्रेमपूरगुहां प्रति ॥२४॥ इत्थं

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

सर्वक्रतूत्तमो निगदितो ब्रह्माण्डसंतर्पकः केशेंद्रादिसुरासुरार्थजनको यद्धेतुसंदर्श-
नात्॥ यस्मात्सर्वविवक्षितो हि गुरुराट् किं मानवानां सदा तस्मात्तत्क्रतुकर्मवाक्य-
कथनं पायात्स वो माणिकः ॥२५॥ इति श्रीमननादिसिद्धचरितामृताब्धिसारे
भवद्वधान्वंतरे दीनवत्सलसंवादकरे माणिकप्रभाकरे दशममयूखः ॥ १० ॥

दीन उवाच ॥ स्वयं संतानसुस्वादुफलामृतरसाधिकात् ॥ किंशुकानन-
तोधिक्यः पीतस्त्वन्मुखसौरसः ॥ १ ॥ अत्यपूर्वो न कस्यापि प्राप्तः कालत्रये-
प्यणुः ॥ किमु मोक्षस्तु एकैव पुनस्तं पाययस्व मे ॥ २ ॥ पुरा सत्रस्तवे सर्वे
स्वमतैरनुवर्णिताः॥ सत्यासत्यविचारेत्र संशयः प्रतिभासितः ॥३॥ एकस्य संश-
यच्छेदे सर्वसंशयवारणात् ॥ अद्वैतानां कृतः प्रश्नः सिद्धांतो वात्र संशयः
॥ ४ ॥ सिद्धांतैवेति तैरुक्तः कथं त एव वैष्णवाः ॥ विना संशयतः स्युः किं
तेषां किमपि नोत्तरात् ॥ ५ ॥ वैष्णवानां कृतःप्रश्नः कथं श्रीवैष्णवाप्युत ॥ प-
रोक्षे युक्तयः संति नापरोक्षे किमुत्तरं ॥ ६ ॥ अतो नो पुस्तकी विद्या परह-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

 

स्तधनं यथा ॥ यावन्मतेपरोक्षत्वात्सर्वत्रैवमनिश्चयात् ॥७॥ मतांतराभिगमना-
त्सिद्धांतोत्र कथं त्विति ॥ वत्सल उवाच ॥ मतांतरेपि संचारे नापसिद्धांतरं-
मतः ॥ ८ ॥ अत्र मुख्यो गुरुर्यस्मान्मान्यः सर्वमतेष्वपि ॥ केनापि मततः सैव
कुरुते चापरोक्षतां ॥९॥ यथाधिकारसंप्रश्नस्तथा संशयवारकः ॥ यः संशयी स्वयं
साक्षात्कथमन्यस्य वारणं ॥१०॥ गुरुरूपं दूरतरं पश्यत्वमतरूपकं ॥ शब्दाना-
मादिखं ब्रह्म त्वनादिप्रणवस्त्रिवृत् ॥ ११ ॥ मूले ब्रह्मांडवृक्षाश्च पिंडानि वटशा-
खतः॥कालांतरेशुष्ककाष्ठे संघर्षाग्निस्वदाहनं॥१२॥ मूलद्रवात्पुनर्वृक्षस्तद्वत्तत्र पुनः
पुनः ॥ त्रिवृतोदिरजो ब्रह्मा चैकत्वात् विधृतो वियत् ॥ १३ ॥ तपेत्यभूद्विय-
द्वाणी त्रिवृद्भेदः स एव हि॥ स्वयं यस्मादपौरुषेयस्तस्यार्थः कोनु वास्तवः॥१४॥
अस्तु ब्रह्मा तु तपसा त्रिवृताच्च त्रिमूर्तयः॥ उत्पत्त्यादिककर्तारो धाता पूर्वमकल्प-
यत् ॥ १५ ॥ तपोनुभावाद्बुद्ध्या तु तानादिश्यत्तपो मतं ॥ दत्वा तपोवनं भू-
मौ तेपिरे ऋषयस्तपः ॥ १६ ॥ रुद्रो विचार्य बुद्ध्याहं तारकस्योपदेशकः ॥ हार्द



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

ज्ञात्वा नारदस्तु द्रुतमद्वैतबोधतः ॥ १७॥ निष्कासितश्च तपसो ऋषीन्प्रवृत्तिमा-
र्गतः ॥ सृष्टेः स्थित्यै विष्णुरपि नारदायादिशत्पुनः ॥१८॥ भक्तिमार्गेनाटमानो
गायन्विष्णुयशःसदा॥ततो बहुऋषिमतं संविज्ञातं हि बुद्धितः॥१९॥कृतकृत्याः
प्रजाजात्याः पूर्वं कृतयुगे स्थिताः ॥ त्रेतायां याजकास्ताः स्युर्द्वापरे त्वर्चना-
विधौ ॥ २० ॥ परावरज्ञा ब्रह्माद्यास्तदैव शरणं गताः ॥ मंदाः सुमंदमतयो कलौ
चाल्पायुषः प्रजाः ॥ २१ ॥ तासां गतिविधानाय व्यासत्वेनावतारितः ॥ येन
वेदश्चतुर्धा तु नवद्विगुणसंख्यया ॥ २२ ॥ सेतिहासपुराणानां कर्तासमभव-
त्तदा ॥ भारतं पंचरात्रादि भाष्यसूत्राणि यान्युत ॥ २३ ॥ कलावल्पायुषत्वाच्च
येन संक्षिप्य वर्णितं । विद्यायाश्च निधित्त्वाच्चु स कथंविस्तराम्यहं ॥ २४ ॥ इत्थं
संवर्णितस्यापि हृदयं नाभ्यनंदत ॥ मम कर्तुर्गतिरियं किमूतदनुषंगिनां ॥२५॥
न ग्राह्योत्र कुतर्कोहि जनानां गतिहेतुकः ॥ तदा चोक्तं नारदेन भक्तियोगेन
तद्गतिः ॥ २६ ॥ व्यासोपि श्रीभागवतं भक्तियोगविजृंभितं ॥ सज्जनोद्धारक-



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

मिति मत्वा मत्वाभ्यनंदत ॥ २७ ॥ वैपरीत्ये कलौ प्राप्ते शंकराचार्यबुद्धितः ॥
श्रुतिवल्लिप्रमाणेन चाद्वैतं स्थापितं मतं ॥ २८ ॥ मतवृक्षस्य वल्लीयं यत्र कुत्रा-
पि वेष्टति ॥ धातूनामप्यनेकार्थात्स्मृतीनामनुकूलता ॥ २९ ॥ अद्वैतानापि-
लोकाः स्युः पाखंडा वर्णसंकराः ॥ तदा तेनैव तत्रैव श्रुतिस्मृत्यनुकूलतः ॥३०॥
तैरेव सूत्रैर्भक्त्यर्थं द्वैतं मद्भावतारकः ॥ भक्त्यैव सर्वमुख्या हि व्यासेनापि
तथोदितात् ॥ ३१ ॥ असंख्यानि सजातीयविजातीयमतान्यपि ॥ गजाकृतीव
चांधानां यथाबुद्ध्यवगानतः॥ ३२ ॥ यथा बौद्धमतेर्देहः सोपिसत्त्यैव भाति मे॥
देहेनोत्पद्यते जीवो देहेनैव शिवोच्यते ॥ ३३ ॥ देहेन बद्धो मुक्तिश्च ब्रह्मा-
ण्डमपि देहतः ॥ सृष्टिरुत्पद्यते देहाद्देहतश्च लयस्थिती ॥ ३४ ॥ देह आत्मेति
विख्यातो देहे सर्वं प्रतिष्ठितं ॥ नो देहस्य परित्यागात्किमु तस्य परिग्रहः
॥३५॥ कथं मतपरित्यागो देहात्सर्वमपेक्षितम् ॥ तस्मात्सर्वमतं त्वत्र कोच्छेदः
स कथं भवेत् ॥३६॥ शब्दब्रह्मणि निष्णाते न निष्णातो परे यदि॥ मतानां किं



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

नु दोषः स्यादुलूकोर्क इवापरः ॥ ३७ ॥ दीन उवाच ॥ किंचशब्दब्रह्मणोपि
चेत्परं कृपया वद ॥ वत्सल उवाच ॥ कति ब्रह्म कति माया कतीति व्योम
संवदे ॥ ३८ ॥ तथापि वक्ष्ये संक्षेपादुपसंहारतः शृणु ॥ मतानेकोपसंहारे द्वय-
मेवावशिष्यते ॥ ३९ ॥ एकं प्राकृतिकं ज्ञेयं द्वितीयं पौरुषीयकम् ॥ ज्ञानिनां
पौरुषं सांख्यं भक्त्याख्यमथ कर्मिणां ॥ ४० ॥ ज्ञानाद्वैराग्यादिमतं कर्मोपासा-
दिभक्तितः ॥ यथाहं ब्रह्मस्फूर्णेति यस्मात्प्रकृतिपूरुषौ ॥ ४१ ॥ मनःसृष्टावपि द्वय-
मुद्गारेच्छैव दंपती ॥ प्रणवस्यार्धनादेपि सूक्ष्मप्रकृतिपूरुषौ ॥ ४२ ॥ तस्मान्म-
तद्वयं तावद्यावत्प्रकृतिपूरुषौ ॥ अत्राप्येवं तावदेव मतवादो हि शब्दतः ॥ ४३ ॥
शब्दस्तुलीयते व्योम्नि व्योम चैव तमोगुणे ॥ तमोगुणस्तु मायायां साहंतत्वेश्वरे
पुनः ॥ ४४ ॥ सोपि मूलप्रकृतौ च सानिर्वाच्या हि ब्रह्मणि ॥ तच्चिदात्मा
काशयतः स प्रभाकाशके पुनः ॥ ४५ ॥ तस्यावकाशतो दूरमाकाशो निरुपा-
धिकः ॥ स एव सर्वं सर्वांतर्निर्लेपो दूरमंतिके ॥ ४६ ॥ दीन उवाच ॥ एत-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

न्मानेन क्व मतं मतवादो न गण्यते ॥ अस्त्वंतिके कुतो दुष्टो गुरुदृष्टिं विना कथं ॥ ४७ ॥ देह्यस्माकं नोधिकारात् त्वय्यस्तिचेद्दस्व नः ॥ वत्सल उवाच ॥ कुतर्केणैव घातोयं प्राप्तिर्मौनोत्तरस्य वा ॥ ४८ ॥ तथाप्यनधिकारस्य दत्तेपि किं फलं भवेत् ॥ यथार्जुनस्य दत्तेपि वेपमानस्तु मूर्च्छितः ॥ ४९ ॥ किंचिदुग्रं नृसिंहं तु द्रष्टुं नार्हति यं रमा ॥ कुटीचराणां स कथं कुंभेऽब्धिः स्तंभनार्थवत् ॥ ५० ॥ तस्माद्दीन हटादेव सर्वं सद्गुर्वनुग्रहात् ॥ दीन उवाच ॥ केन मार्गेण देहेस्मिन्योगी पश्यति तत्कथं ॥ योगिनोन्यस्य जननं मृत्युर्जीवस्य लक्षणं ॥५१॥ वत्सल उवाच ॥ सूर्यप्रकाशे सुनेत्रे सर्वं हि दृश्यते स्वयं ॥ ५२ ॥ कल्पनायाअनेकत्वात्कतिधा वर्णनेन किं ॥ अग्निवाय्वोः संनिकर्षाज्ज्योतिवज्जनिलक्षणं ॥ ५३ ॥ तैलवर्तिप्रकाशेन स्थितिर्मृत्युस्तु नाशतः ॥ क्वचित्सत्वे वातमृत्यू चैतन्यं जीवलक्षणं ॥५४॥ चैतन्यमपि संघर्षान्मायायाः पुंस्त्वशक्तितः ॥ चेच्चैतन्यं हि सर्वत्र सूर्याधः सूर्यकांतितः ॥ ५५ ॥ अग्निव्यक्तिर्हि कार्पासे



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

नो सर्वत्र प्रकाशतः ॥ यथा पदार्थसंघर्षस्तथा वृक्षादि जीवनं ॥ ५६ ॥ जनि-
भूतादिमिलनान्मरणं कालतस्तथा ॥ सूत्राकृतौ सूत्रनाशाच्चालनं न भवेद्यथा
॥५७॥स्मृतिविस्मृतिभेदेन भेदश्चान्यस्य योगिनः॥स कथं चेदवर्णाच्च जीवैकेनृप-
शोर्यथा॥५८॥नरेष्वपि तु प्रत्यक्षो मतिमन्मतिहीनयोः॥यथाक्रियाभ्रष्टहृदि भ्रष्ट-
संकल्प एव हि॥५९॥ सत्ये सत्यं कथमिति पूर्वमेव ह्युदाहृतं॥यत्र ब्रह्माण्डवार्तापि
का कथा चेतरस्य तु॥६०॥ अस्तु योगी देहशोधादामूलाद्ब्रह्मरंध्रतः॥ कलाचैतन्य-
सज्योतिर्ब्रह्मनाडीं च विंदति॥६१॥यस्याधारे सूर्यचंद्रौ शतं चैकाप्यधारतः॥द्वास-
प्ततिसहस्रादिबंधनैर्बंधिता तनुः॥६२॥तान्युन्मुच्य समाकृष्य स कुंडलिविधूयतः॥
आसनात्कंठनालाग्रसूक्ष्मद्वारात्रिकूटकं ॥६३॥ प्राणत्यागे दुःखमिव तत्रापि च
द्विमार्गतः॥ घोटानुद्घाट्य साहस्रं स्वात्मानं चानुपश्यति॥६४॥सद्गुरुश्चेच्च तत्रापि
सुखेन क्षणतो लभेत् ॥ नोचेज्जन्मसहस्रांते प्राप्तो भवति वा न वा ॥ ६५ ॥
तत्रापि वासनासूक्ष्मात्प्राकृतत्वाद्गुरौ लयः ॥ तस्मात्सर्वं गुरावेव सर्वैक्यत्वाच्च

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

सर्वदा ॥६६॥ इत्थं सर्वमतं ज्ञेयं पुनः किं श्रोतुमिच्छसि ॥ दीन उवाच ॥ भै
क्ष्यदंडासनान्यत्र किमर्थं वदतां वर ॥६७॥ वत्सल उवाच ॥ सर्वेषामुपकारार्थं यथा
सकलसन्मतं ॥ सकलान्यपि मीयंते यस्मिंस्तत्सकलं मतं ॥६८॥ सर्वाः कला
यस्मिन्निति यद्वा सम्यक्कलेत्यपि ॥ सकलो विद्यते यस्मिन्भालचंद्रस्य मान्यतः
॥६९॥ कलासहितविष्णोस्तु मान्याच्च सकलं मतम् ॥ या या यस्य कला ये-
षां सर्वेषां सकलं मतं ॥७०॥ उपासकानां सेवार्थमासनं संस्थितं स्वयं ॥ तद्रक्ष
णार्थो दंडो हि भिक्षा संजीवनार्थिका ॥७१॥ औत्पत्तिके चासनं हि स्थितौ भि
क्षासमोचकः ॥ एकैकमप्यलं त्रित्वे यद्वत्वा चेति नेति तत् ॥७२॥ आदौ मू-
लाच्च यद्दारुभिक्षान्नाद्ब्रह्मचाहरेत् ॥ गुरुस्थाने सर्वदेवा मणिधेनुसुरद्रुमाः ॥७३॥
आश्रयंते हि भक्तानां कामनापूरकत्वतः ॥ परिक्रमे पादरजादसंख्यं फल ॥३३॥
मश्नुते ॥ ७४ ॥ भिक्षान्नसिक्थग्रहणात्सर्वरोगात्प्रमुच्यते ॥ दंडसंदर्शनादेव
यमदंडं च नेक्ष्यति ॥७५॥ किं पुनः पूजनाद्ध्यानादार्तिक्याद्भजनात्फलं॥ गुरु-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

स्थानादिमहिमा साकल्यात्कः क्षमो भवेत् ॥ ७६ ॥ भक्तकार्यों महामंत्रो महापूजासनस्य तु ॥ महाप्रसादभिक्षान्नं त्रयं त्रैलोक्यदुर्लभं ॥७७॥ नैतस्माच्च परं किंचित्सत्यंसत्यं वदाम्यहं ॥पुनर्दीन किमापेक्षा दक्षो पूर्तौ गुरुर्यतः॥७८॥इत्थं वरदवाण्या तु दीनो हीनममुंचत ॥ दीन उवाच ॥ एतावत्कालपर्यंतं संशयो मे महान् हृदि ॥७९॥ रक्षितो गौप्यतो मानात् वच्म्यहं ज्ञायसे यतः ॥ ८० ॥ प्रभो जयतु जन्म ते त्वघकृतो ममानुग्रहाद्यतो हि भ्रमतः सदा न च तवांतिके ऽनुग्रहात् ॥ इतोपि न तवाज्ञया पठितमूर्खवद्दुर्ग्रहादतश्च सुकृतं यथा न तथा रवींदुग्रहात् ॥ ८१ ॥ इतोपि बहुपातकी बहुकुतर्कि यद्ब्रह्महा स्वतोपि यतयः सदा दृगभिव्यक्तितो ब्रह्महा ॥ अगम्यगमनादितो यदभवन्ममाब्रह्मता त्वगम्यगमनाद्यतः सुगमतो स्वतो ब्रह्मता ॥ ८२ ॥ सदाप्यनृतभाषणो न च मनस्त्वदीयांतके यतो विषयकर्षणाद् व्यथयते भृशं त्वंतके ॥ तथापि किमुपायतो मम भवेत्तव स्वांतकम् यथा विदितदीपके तनुपतंगवत्स्वांतकं ॥८३॥ स्वत-

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

||३४|| स्त्वति च घातकं त्वतिबलाच्चकोरक्षति यथा विधुमुपेक्षकोथ किमिव चकोरःक्षति॥
प्रभ्रष्टस्वकुपुत्रको मृतमपि न तस्यक्षितिस्तथा न गुरुराडयं मम मुहुः स्वयं
चेक्षति ॥८४॥ यतो मम समो नहि कृतमहापराधाग्रणीस्त्वतस्तुगुणमाणिको
जगति ध्वांतहारे घृणिः॥न चेत्कथमजस्त्विह मम तु भासते प्रागृणी धिगस्तु मम
जीवितं सहति देवपार्षद्गणी ॥८५॥ दिनोद्धरणता यदि त्वयि तथापि नो
दीनता यथोद्धतस्वभावतो मनसि मे कथं दीनता॥ कदापि पदपद्मनि न च क-
पोलकादीनत स्तथापिजलधौ यथा गिरिवरान्नदा दीनतः ॥ ८६ ॥ अनाथ-
मिति मन्यसे न च मयि महान्संभ्रमः पितामह सुमानसे किमपि चास्ति
भ्रांतिभ्रमः॥कुबेरनिधनोप्यहं क्व च सुगोत्रभिद्भ्रिमस्त्वतः किमवशेषितं सलिल-
हीनवच्छुभ्रमा॥८७॥अतश्च जयती न मे सदृशशिष्यसंपादिकः प्रभुर्न जगतीत्र-
ये न च विना तु श्रीपादिकः ॥ इति श्रवणजल्पतो भवतु नैव कोपादिकस्तथा न ||३४||
च पुनर्जनिर्भवतु वात्रपापादिकः॥८८॥इति ग्रथितजयंती मंजरीवर्णमाला विज-
CC.O- Jangamwadi Math Collection. Digitized by eGangotri

यतु जयकंठे मुक्तकृज्जन्ममाला ॥ गुरुवरधरणात्सा चागताहृत्तमाला भवभयजप
तां वा संस्थिता मत्तमाला ॥८९॥ ग्रंथस्य किं फलं सर्वं ग्रंथस्य किं फलं श्रुतिः॥९०॥
अदृष्टदोषान्मतिविभ्रमाच्च यत्किंचिदेतल्लिखितं मयेह ॥ तत्सर्वमार्यैः परिशोधनी-
यं कोपं न कुर्याच्छिशुलेखकस्य ॥९१॥ इति श्रीमदनादिसिद्धचरितामृताब्धिसारे
भवद्वधान्वंतरे दीनवत्सलसंवादकरे श्रीमाणिकप्रभाकरे एकादशमयूखः ॥११॥
श्रीमाणिकार्पणमस्तु॥श्रीगुर्वर्पणमस्तु॥शुभंभूयात्॥अथ तत्रावनितलमलविलुलि
तस्थलादतितरलकामकश्मलेनांदोलनवद्दोलायमानमनसांतथा भवसलिलधीवल
यितकल्लोलकोलाहलमल्लयुद्धवद्दलितगात्रशिथिलानां एवमेव विबुधाबुधसुबु-
द्धकुबुद्धसिद्धसाध्यामेध्यानां मध्येदीनैकोंभसावर्ते भवसिंधूद्भूतबिंदुबुद्बुदो ब-
भ्राम ॥ कदाचिच्चिदाकाशावकाशप्रकाशयन्गुणाकाशे द्युमणिवन्नानामणिग-
णागण्यप्रभाजालोल्लसितः पाशभीतदासश्वासरोधोपासितपांसुसिंचत्पादभूषणा-
रुणतरणिमणिखचिन्नूपुरध्वनिखणखणायमानकिंकिणीक्वणनोच्चाटितभयः ॥ १ ॥

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

लीलामानुषविग्रहो भक्तकार्यकल्पद्रुम गुरुसार्वभौम श्रीमद्राजाधिराज योगी
महाराज त्रिभुवनानंदाद्वैताभेदनिरंजन निर्गुणनिरालंबपरिपूर्णानंद सदोदित
सकलमतस्थापित सद्गुरुमाणिकः बाललीलाखेलायमानः सन् दीनबुद्बुदं करत-
लामलकवत् जग्राह ॥ आर्या ॥ हीनोपि दीनमीनो धीवरगलकंठकंटकोन्मुक्तः॥
श्रीमद्गुरुवरपाणौ शुशुभे पितृकरतलस्थसन्मुक्तः॥ १ ॥ दत्तात्रेयो हरिः कृष्ण
उन्मत्तोनंददायकः ॥ मुनिर्दिगंबरो बालो पिशाचो ज्ञानसागरः ॥ १ ॥ आ-
दिनाथं सुरश्रेष्ठं कृष्णं श्यामं जगद्गुरुं ॥ सिद्धराजं गुणातीतं रामं राजीवलोचनं
॥ २ ॥ नारायणं परं ब्रह्म लक्ष्मीकांतं परात्परं ॥ अप्रमेयं सुरानंदं नमो दत्त-
दिगंबरं ॥ ३ ॥ योगिराजोऽत्रिवरदः सुराध्यक्षो गुणांतकः ॥ अनसूयात्मजो
देवो देवोगतिप्रदायकः ॥ ४ ॥ गोपनीयः प्रयत्नेन देवासुरमुनीश्वरैः ॥ समस्त-
ऋषिभिः सर्वैः भक्त्या स्तुत्वा महात्मभिः ॥ ५ ॥



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

## अथश्रीमन्माणिकाष्टकं ॥

वंदे श्रीप्रभुसद्गुरुं गुणनिधिं सद्भक्तकल्पद्रुमं
मंदानां शरणं शरण्यममलं नाथं त्वनाथाश्रयं ॥
यत्सत्ताकतया तु स्थावरभवो देहः सुचेष्टान्वितः
सो यत्नो विदधातु वांच्छितफलं माणीककल्पद्रुमः ॥ १ ॥
यो भक्तकार्यद्रुमराद् गुरुसर्वस्थापी राजाधिराजगुरुराजप्रभुः परोऽजः
आनंदअद्वैतनिरंजनस्तु माणीकसद्गुरुजयत्यथ सार्वभौमः ॥ २ ॥

श्रीनिर्विकारविमलप्रभुपूर्णपूर्ण निर्दोषनित्यनिजमानसहंसवर्य ॥ स्फूर्णाख्यभावगुणतस्तनुपाशबंध हे माणिकेति दयनीय दयां कुरुष्व ॥ १ ॥ यद्वासनासृतिविकर्मजजीवजालं देहाभिमानगुरुभारभराढ्यभालं ॥ कामादिषट्कमणियुक्तधृतार्तिमालं ॥ हे माणिकेति दय० ॥ २ ॥ लोकेषणाख्यनिगडेन द्विपादबद्धं वित्तेषणाख्यनिगडेन द्विहस्तबद्धं ॥ दारेषणाख्यनिगडेन आकंठमग्नं हे

CC.O- Jangamwadi Math Collection. Digitized by eGangotri

माणिकेति० ॥ ३ ॥ प्रारब्धकर्मबलवत्तरकर्षणेन यन्मातृकुक्षिभवतापनिपीडितं च ॥ आतीक्ष्णयद्रसजजंतुतुदं विनीतं हे माणिकेति दय० ॥ ४ ॥ एवंप्रतिजननीगर्भजजालबंधं विण्मूत्रनरककुहरे अतिपच्यमानं ॥ यज्जाठरानलबलप्रबलेन तप्तं हे माणिकेतिद० ॥ ५ ॥ प्रासूतवायुबलकर्षणयंत्रदुःखाद्विस्मृत्य सोहममलं सततं च कोहं ॥ भ्रांत्या तमिस्रपरतंत्रजदुःखबालं हे माणिके० ॥ ६ ॥ आबाल्ययौवनवयस्यापिस्त्रीप्ररक्तं कूपे पतंतमथ शैथिलदेहदार्ढ्यं ॥ सर्वैरुपेक्षिततनुं प्रियमाणमुक्तं हे माणिकेति० ॥ ७ ॥ इत्थं चतुरशीतियोनिगणान्भ्रमंतं कोहमितिस्वगतज्ञानलवेन हीनं ॥ दीनोद्धरावनतभृद्वतराद् स्वदीनं हे माणिके० ॥८॥ इति स्तवेन संतुष्टः शिष्टं प्रत्यक्षमब्रवीत् ॥ कलौ तु मम नामैव नामैव तव जीवनम् ॥ ९ ॥ यः पठेत्प्रातरुत्थाय इदम्सर्वेप्सितप्रदम् स माणिकं प्रपद्येत मनसा, वचसा, दृशा ॥ १० ॥ ॥ ७॥ ॥ ७॥ ॥ ७॥



CC.O- Jangamwadi Math Collection. Digitized by eGangotri

